**भारतीयम् अर्थशास्त्रम्** संस्कृतभाषायाम् अर्थशास्त्रमधिकृत्य इदम्प्रथमतया रचितं पुस्तकम् ।

अस्य ग्रन्थस्य प्रथमप्रकरणे भारतदेशस्य प्राचीनतमशास्त्रग्रन्थेषु प्रतिपादितानाम् आर्थिक-विचाराणाम् उपस्थापनं वर्तते । आधुनिकार्थशास्त्रप्रमेयैः सन्तुलनमपि अत्र विहितम् । तदनु अन्यप्रकरणेषु जवाहरलालनेहरु, दादाभाई नौरोजी, महादेव गोविन्द रानडे, गोपालकृष्ण गोखले, महात्मागांधी महाभागानाम् आर्थिकविचारधाराणां विमर्शः कृतः वर्तते । स्वातन्त्र्योत्तरकाले गतपञ्चाशद्वर्षेषु प्रसक्तानाम् आर्थिकनीतीनां प्रस्तावः अपि अत्र विहितः आस्ते ।

आधुनिकार्थशास्त्रविषयाणां प्रतिपादनविमर्शनादिकं संस्कृतमाध्यमेन कर्तुं शक्यते इति प्रदर्शनम् अस्य ग्रन्थरचनायाः उद्देशेषु अन्यतमः उद्देशः । संस्कृतविश्वविद्यालयेषु संस्कृतपाठशालासु च आधुनिकार्थशास्त्रस्य अध्ययनार्थम् अयं ग्रन्थः उपयुक्तः भवेदिति आशास्यते ।

अयम् ग्रन्थः सरलसंस्कृतभाषायां लिखितः वर्तते । संस्कृते नूतनतया रचितानाम् अर्थशास्त्रस्य पारिभाषिकशब्दानां परिचयः आंग्लभाषायां ग्रन्थस्य परिशिष्टभागे प्रदत्ते शब्दकोशे समुपनिबद्धोऽस्ति । अतो ग्रन्थोऽयं सुबोध्यः, विषयजिज्ञासूनाम् उपकाराय चेत्याशास्यते ।

भारत-स्वातन्त्र्य-स्वर्णजयन्ती-ग्रन्थमाला—3

# भारतीयम् अर्थशास्त्रम्

वा० रा० पञ्चमुखी



राष्ट्रिय-संस्कृत-संस्थानम्

1998

# प्राक्कथनम्

*योऽनूचानस्स नो महान्* इत्युद्दिश्य संस्कृतसंरक्षणसंवर्धनप्रचारप्रसारात्मकं स्वोद्देश्यं साधु निर्वहदिदं राष्ट्रियसंस्कृतसंस्थानं भारतस्वातन्त्र्यस्वर्णजयन्तीं विविधैश्शैक्षिककार्यक्रमैरायोजयतीति विज्ञाय समेषां विदुषां संस्कृतानुरागिणां च मनांस्यवश्यं मोमुद्येरन् ।

प्राचीनशास्त्राणां संरक्षणे, संवर्धने, संस्कृताध्ययनपरम्पराया राष्ट्रियैकात्मतासंवर्धनशक्तेश्च प्रचारार्थं संस्थानेनानेन निरन्तरं विहितं सत्प्रयत्नं योगदानं च विद्वत्समवायस्सर्वथाभिनन्दतीति विश्वस्यते ।

भारतस्वातन्त्र्यस्वर्णजयन्तीशुभावसरे राष्ट्रस्यास्य विभिन्नेषु प्रान्तेषु विद्योतमानैर्विद्वत्तल्लजैः नानाशास्त्राणि तत्र निहितानि वैज्ञानिकतत्त्वानि चाधिकृत्य विरचितानि ग्रन्थकुसुमानि सादरं सञ्चित्य सङ्ग्रथ्य च **भारत-स्वातन्त्र्य-स्वर्णजयन्ती-ग्रन्थमालात्वेन** तत्रभवतां समक्षमुपस्थाप्य महानानन्दस्सन्तोषश्चोपजायेते ।

तत्रेदं ग्रन्थरत्नं **भारतीयम् अर्थशास्त्रम्** इति भारतदेशस्य प्रसिद्धेष्वर्थशास्त्रिष्वन्यतमैः, अन्ताराष्ट्रियार्थविश्लेषणे, आर्थिकविकासचिन्तने **एकोनोमेट्रिक्स** इति विषये च प्राप्तप्रावीण्यैः अन्ताराष्ट्रियार्थिकसंशोधनसंस्थाया निदेशकपदमलङ्कुर्वाणैः संस्कृतसाहित्यव्याकरणवेदान्तादिशास्त्रेषु परम्पराप्राप्तविद्यैः **डा० वा० रा० पञ्चमुखी**-महाभागैः प्रणीतम् । अत्र भारतदेशस्य प्राचीनशास्त्रग्रन्थेषु प्रतिपादिता आर्थिकविचाराः, आधुनिकार्थशास्त्रप्रमेयैः सह सम्यग् विवेचिताः । **श्रीमतां जवाहरलालनेहरू-नौरोजी-रानडे-गोखले-महात्मागान्धि**-महोदयानामपि आर्थिकविचाराः सरलसुललितसंस्कृतभाषया प्रस्तुताः । कृतिरियं अर्थशास्त्रजिज्ञासूनां संस्कृतविदुषाम् अन्तेवासिनां चोपकाराय कल्पिष्यत इत्याशास्महे । स्वातन्त्र्य-स्वर्णजयन्ती-ग्रन्थमालायै एतादृशम् अनुपमं

ग्रन्थरत्नं प्रस्तुतवद्‌भ्यः डॉ० पञ्चमुखी-महाभागेभ्यः संस्थानं हार्दिकं कार्तज्ञ्यं ज्ञापयति ।

भारतस्वातन्त्र्यस्वर्णजयन्तीसमारोहाङ्गत्वेन संस्थानेन आयोज्यमानेषु विविधशैक्षिकानुष्ठानेषु, विशेषतो ग्रन्थमालायाः आयोजनप्रकाशनादिकार्येषु कृतभूरिपरिश्रमाः अस्माकं सहयोगिनः विशेषेण डॉ० सविता-पाठक, डॉ० विरूपाक्ष वि०जड्डीपाल-प्रभृतयः साधुवादार्हाः ।

**अमरमुद्रणालया**धिकारिणः स्वल्पीयसि काले ग्रन्थममुं सम्मुद्र्य यथासमयं लोकार्पणाय च प्रस्तूय अस्माकं सङ्कल्पसिद्धौ विशिष्टं सहयोगं कृतवन्तः । एतदर्थं ते धन्यवादार्हाः ।

२६.३.९८

**कमलाकान्तमिश्रः**

निदेशकः

**राष्ट्रियसंस्कृतसंस्थानम्**

# उपोद्घातः

अधुना 'अर्थशास्त्रम्' इति पदेन प्रायः पाश्चात्यार्थशास्त्रे प्रतिपादितानां प्रमेयानां, तत्र विहितस्य विश्लेषणस्य च सङ्ग्रहः मनसि अवधार्यते। देशस्य आर्थिकविकासमार्गस्य चयनविषये, आर्थिकनीतिविकल्पानां विश्लेषणप्रसङ्गे, अथवा विविधानाम् आर्थिकव्यवहाराणां परस्परसम्बन्धस्य अवगतिविमर्शनप्रसङ्गेषु च अधुनातनाः अर्थशास्त्रज्ञाः प्रायः पाश्चात्यदेशेषु प्रथितयशसाम् अर्थशास्त्रविचक्षणानां प्रमेयान् विचारधाराप्रसरं च आधारत्वेन अवधार्य आत्मनः नीतिप्रबोधनं प्रकुर्वन्ति। अनेकदा प्रसक्तिविवेचनं विनैव पाश्चात्यार्थशास्त्रज्ञेषु आलम्बनं तद्विचारधारादासभावेन विधीयते इति हन्त। एवम् अन्यदेशीयार्थशास्त्रज्ञानां संशोधनप्रबन्धानाम् अध्ययनाध्यापनादिकार्येषु दतावधानानाम् अत्रत्यार्थशास्त्रविमर्शकानां मनोयोगः, भारतदेशे एव प्रगल्भा आर्थिकवैचारिकपरम्परा भारतदेशस्य सामाजिकराजकीयसांस्कृतिकपरिसरस्य अत्यन्तम् समुचिता सती चकास्ति इत्यात्मकाम् अवगति नैव गृह्णाति इत्यपि शोचनीयो विषयः।

भारतदेशे स्वातन्त्र्यप्राप्तेः पूर्वं राजकीयस्वातन्त्र्योद्देश्यं प्रसक्तान्दोलनप्रसङ्गे एव देशे जनजागृतिप्रचोदनकर्मणि नेतृत्वस्थानं गृहीतवन्तः अनेके धुरीणाः भारतदेशस्य आर्थिकविकासोद्देशमनुलक्ष्यापि विशिष्टविचारधाराः पुरतः कृतवन्तः। स्वातन्त्र्यप्राप्तेः पश्चात्तनकाले अपि भारतदेशे अर्थशास्त्रसन्बद्धाः अनेके वैशिष्ट्यसपन्नाः वैचारिकप्रमेयाः प्रतिपादिताः वर्तन्ते। तथा च अस्माकं वेदेतिहासपुराणादिशास्त्रग्रन्थेष्वपि अधुनातनकालस्यापि औचित्यं दधन्तः आर्थिकप्रमेयाः मौलिकविचाराः च प्रासङ्गिकशैल्या अनुशासिताः दरीदृश्यन्ते।

अधुना सन्दृब्धस्य 'भारतीयम् अर्थशास्त्रम्' इति ग्रन्थस्य अनेकोद्देशेषु अन्यतमः उद्देशः एवं वर्तते भारतीयवैचारिकपरम्परायां प्रतिपादितानाम् अर्थशास्त्रसम्बद्धानां विचाराणां व्यक्तरूपेण प्रकाशनम्। यद्यपि

भारतीयार्थशास्त्रविचाराणां प्रबोधकेषु अनेकानि नामानि परिगणनार्हतां भजन्ते तथापि अस्मिन् ग्रन्थे केषाञ्चन विशिष्टप्रबोधकानाम् एव विचाराणां प्रतिपादनं कृत वर्तते ।अस्मिन् ग्रन्थे, केवलं जवाहरलाल नेहरू, दादाभाई- नौरोजी, महात्मा गांधी, महादेव गोविन्द रानडे, गोपालकृष्ण गोखले महाभागानाम् आर्थिकविचारप्रसरस्य व्यक्तरूपेण प्रकाशने प्रयतितं वर्तते । एतेषां महाभागानाम् आर्थिकविचारधाराणां प्रगल्भत्वं तथा च प्रभावित्वं च अनुलक्ष्य एते एव अत्र विशेषविश्लेषाणार्थम् उद्धृता वर्तन्ते । एकस्मिन् प्रकरणे स्वातन्त्र्योत्तर कालीनार्थिकनीतीनां विवृतिः स्थूलरूपेण निवेदिता आस्ते । **शास्त्रेषु अर्थशास्त्रविचाराः** इति शीर्षके प्रकरणे अस्माकं केवलम् आध्यात्मिकविषय- प्रतिपादकत्वेन परिगणितेषु वेदेतिहासपुराणादिग्रन्थेषु अपि कीदृशाः भारतदेशस्य सामाजिकसांस्कृतिकपरिसरस्य औचित्यपूर्णाः आर्थिकविचाराः प्रतिपादिताः इति विषये चर्चा प्रस्तुता वर्तते । तत्र च अद्यतने पाश्चात्यविचारधारामूलिते अर्थशास्त्रे प्रतिपादितानां प्रमेयानां भारतीयशास्त्रग्रन्थेषु उपस्थापितप्रमेयैः साकं सन्तुलनमपि सम्पादितं चकास्ति ।

अस्य ग्रन्थस्य अन्यदपि प्रयोजनं भावितं वर्तते । पुरा एकस्मिन् काले संस्कृतभाषा व्यवहारभाषा आसीत् । तथा च न केवलम् आध्यात्मिकविषयाः परन्तु भौतिकशास्त्रं गणितीयशास्त्रं खगोलशास्त्रम्, अर्थशास्त्रम् इत्यादिलौकिकशास्त्रसम्बद्धाः विषयाः अपि संस्कृतभाषामाध्यमेनैव प्रतिपादिताः आसन् इत्यामिका अवगतिः अधुनातनकाले प्रायः शिक्षितजनतायामपि नैव भासते । संस्कृतं प्रायः मृतभाषा इति अवगणयन्तः, संस्कृतभाषामाध्यमेन प्रतिपादितान् प्रगल्भविचारानपि उपेक्षमाणाः जना एव बहवः दरीदृश्यन्ते । प्रत्युत संस्कृतभाषायाः सामान्यजनतायां लोकप्रियतां साधयितुं **राष्ट्रियसंस्कृतसंस्थानम्, अक्षरम्, संस्कृतभारती, संस्कृत-अकादमी** इत्यादिसंस्थाः विविधनूतनकार्यक्रमान् निरूप्य परमनिष्ठया धैर्येण च कार्ये प्रवृत्ताः वर्तन्ते । देशे संस्कृतं शिक्षणमाध्यमत्वेन स्वीकुर्वन्ति विद्यापीठविश्वविद्यालयादिज्ञानमन्दिराणि तत्र तत्र उपलभ्यन्ते । परन्तु आधुनिकभौतिकशास्त्रार्थशास्त्रादिसम्बद्धानां विषयाणां संस्कृतमाध्यमेन शिक्षणार्थं सूक्तपठ्यपुस्तकानि नैव उपलभ्यन्ते । अस्मिन् विषये संस्कृतभाषाप्रवीणैः आधुनिकशास्त्रविषयज्ञैः मिलित्वा महत्प्रयासः करणीयः वर्तते । संस्कृतमाध्यमेन एव अर्थशास्त्रविचाराणां चर्चाप्रबोधनादिकं कर्तुं शक्यते इति प्रदर्शनार्थमपि अयं ग्रन्थः प्रस्तुतः वर्तते ।

संस्कृतवाङ्मयप्रपञ्चे प्रथितयशसाम् अनेकमहाकाव्यरचयितृणां विद्वद्वरेण्यानां प्राध्यापकसत्यव्रतशास्त्रिमहाभागानां प्रचोदनेन आशीर्वचनैश्च अयं ग्रन्थः प्रारब्धः सम्पूर्णतां च नीतः। पूज्यानां शास्त्रिमहाभागानां चरणकमलयोः सम्प्रदायपुरस्सरं प्रणतिततिम् अभिवन्दनानि च विदधामि।

आत्मानं धन्यं मन्ये यदयं ग्रन्थः राष्ट्रियसंस्कृतसंस्थानस्य भारतस्वातन्त्र्य-स्वर्णजयन्तीग्रन्थमालायां निवेशितः प्रकाशितश्च। राष्ट्रियसंस्कृतसंस्थानस्य निदेशकानां विद्वदग्रणीनां डॉ० कमलाकान्तमिश्रमहाभागानां सूक्तवाक्चयशोभितं प्राक्कथनम् अस्य ग्रन्थस्य गरिमाणं वर्धयतीत्ययम् महदानन्दकरः विषयः। सम्मान्यानां डॉ० मिश्रमहाभागानां सविधे अभिवन्दनानि प्रस्तूय विरमामि।

उत्तरायणपर्वपुण्यदिनम्
१४-१-१९९८

*संस्कृतदेवताराधकः*
**डा० वा०रा० पञ्चमुखी**

# विषयानुक्रमणिका

## प्रथमं प्रकरणम्

# शास्त्रेषु अर्थशास्त्रविचाराः

भारतीयार्थशास्त्रविचाराणां भित्तिमूलं वेदपुराणेतिहासादिप्राचीनशास्त्र-ग्रन्थेषु संप्रतिष्ठितम् इति कथनं नैव अतिशयोक्तिः। वेदपुराणादिशास्त्रग्रन्थाः मानवस्य न केवलम् आध्यात्मिकोद्धारमार्गोपायान् प्रतिपादयन्ति प्रत्युत लौकिक-प्रपञ्चे कथं वा सुखशान्तिसमृद्धीनां प्राप्तिः भूयादिति विषयमधिकृत्यापि मूलभूत-तत्वानि, व्यवहारीकरणोपायांश्च निर्दिशन्तीति शास्त्रज्ञानां मतम् अत्र अवगाहनार्हताम् अधिगच्छति। कथम् आध्यात्मिकग्रन्थे लौकिकविषयानधिकृत्य चर्चा सङ्गता भवेदिति प्रश्नः स्वाभाविकप्रज्ञया उद्भवति। मूलतः एतादृशप्रश्नस्य प्रसक्तिः शास्त्रग्रन्थानां विषयप्रसरस्य, विस्तारस्य च अज्ञानेनैव प्रचोदिता इति कथनीयं स्यात्। भारतीयशास्त्रग्रन्थाः ज्ञानभाण्डागारा विद्यन्ते। अर्वाचीनसंशोधन-कारैः एवम् अभिप्रेतं यत् भारतीयशास्त्रग्रन्थेषु भौतिकविज्ञानस्यापि अनेके आधु-निकप्रमेयाः क्वचित् प्रत्यक्षरीत्या क्वचित् अप्रत्यक्षरीत्या प्रतिपादिताः वर्तन्ते इति। इदं मतम् अनेकोदाहरणानां विशदीकरणेन स्पष्टीक्रियते। रसायननिर्माणसूत्रं, खनिजपदार्थानां संशोध्य शुद्धीकृतधातोः अवधारणं, परमाणुतत्वानि, अन्तरिक्ष-विज्ञानप्रमेयाः, गणितशास्त्रम्, खगोलशास्त्रं, इत्यादयः आधुनिकविज्ञानप्रपञ्चस्य अनेके विचाराः भारतीयशास्त्रग्रन्थेषु पुरस्कृताः विद्यन्ते इत्येतत् प्राचीनशास्त्रकाराणां सर्वतोमुखीनविदग्धतां प्रदर्शयति।

प्रकृतं, प्राचीनशास्त्रग्रन्थेषु के के अर्थशास्त्रसम्बद्धविषयाः पुरस्कृताः इति विषयमधिकृत्य विस्तरेण विमर्शः विधातव्यः। भारतीयशास्त्रग्रन्थेषु प्रतिपादि-

तानाम् अर्थशास्त्रप्रमेयानां वैशिष्ट्यस्य अवगमः आधुनिकेन, बहुशः पाश्चात्यार्थ-शास्त्र- विचारधाराम् अनुसृत्य प्रसक्तेन प्रमेयप्रसरेण साकं, तुलनात्मकविमर्शने कृते सत्येव स्पष्टीभवति। पाश्चात्यार्थशास्त्रस्य विचारधारायाम् अर्थशास्त्रीयमानवः इत्यात्मका विभावना, तत्रत्य प्रमेयानां प्रतिपादने, अर्थशास्त्रीयव्यवहारस्य विश्लेषणप्रसङ्गे च अत्यन्तं मूलस्थानं धत्ते। अर्थशास्त्रीयमानवः आत्मनः अर्थीयव्यवहारविषये परमविवेकसम्पन्नः इत्यवधारणमपि प्रमेयरचनाप्रसङ्गे भित्तिमूलायितम्। अर्थीयव्यवहारस्य मुख्योद्देशः स्वीयलाभस्य परमावधिपरिमाणवत्वस्य साधनम् इत्येव पाश्चात्यार्थशास्त्रविचारधारायाम् अवधारितम्। अतः अर्थीयमानवेन स्वीय-लाभस्य परमावधिप्रापणप्रसङ्गे कथं, कुतः, कीदृशश्च व्यवहारः क्रियते? एतादृशव्यवहारस्य प्रचोदकाः कीदृशाः? एतेषां मध्ये कीदृशः सम्बन्धः दरीदृश्यते? इत्यादि प्रश्नानधिकृत्य प्रसक्ता चर्चा, तत्परिणामत्वेन उद्बोधिताः प्रमेयाः पाश्चात्यार्थशास्त्रस्य स्वरूपमिति प्रतिभासन्ते।

**मानवव्यक्तित्वस्य समग्रताबोधः**

भारतीयशास्त्रप्रबोधितार्थशास्त्रे तु मानवस्य व्यक्तित्वे-अर्थीयमानवः, तदितरलक्षणः मानवः—इति प्रभेदः नैव विभावितः। मानवस्य समग्ररूपेण व्यक्तित्वे विभाविते सति, तस्य व्यवहारे अर्थीयविषयाः तथा च आध्यात्मिक-विषयाः (पारमार्थिकविषयाः) इति उभयप्रकारकविषयाः प्रसक्ताः भवन्ति। मानवस्य प्रवृत्तिविमर्शनप्रसङ्गे विवेकित्वावधारणे कृते सत्यपि, स्वकीयलाभस्यैव परमावधी-करणं मानवव्यवहाराणां मुख्योद्देशत्वेन नैव प्रसज्यते। मानवः आत्मनः सुखस्य साधनायैव अविरतं प्रयतते इति सत्यमङ्गीकृतम्। परं सुखं नाम किं? सुखसाधनस्य के ते उपायाः? प्रत्येकं व्यक्तिः आत्मन एव सुखस्य परमावधीकरणम् उद्दिश्य प्रवर्तमानः अपि कथं समाजे स्थितानाम् अन्येषामपि सुखस्य परमावधीकरणं प्रापयितुं शक्नुयात्? इत्यादयः विशिष्टप्रश्नाः शास्त्रीयार्थशास्त्रे विमर्शनविषयताम् अधिगच्छन्ति।

मानवस्य सुखं केवलं स्वकीयार्थिकलाभेन अथवा स्वकीयायस्य परिमाणेन साकम् अविसंवादेन संगतमिति शास्त्रीयार्थशास्त्रं नैव अनुमोदते। मानवस्य

सुखस्वरूपे लौकिकसुखं, पारमार्थिकसुखमिति विभागं प्रतिपाद्य मानवः उभय-विधसुखसाधनमुद्दिश्यैव प्रवर्तमानोऽपि लौकिकसुखस्य अस्थायित्वम् अनुसन्द-धान एव आत्मनः व्यवहारस्य स्वरूपं निर्धारयतीति अत्र प्रातिपादितं वर्तते । सुखस्य स्वरूपे मनसः शान्तिः, तृप्तिः, समाहितत्वं, त्यागप्रवृत्तिः, परहितसाधनेच्छा, इत्यादीनि लक्षणानि अविभाज्याङ्गत्वेन अङ्गीकृतानि । एतादृशं सुखं केवलम् आत्मनः लाभेनैव अथवा आत्मनः आदायपरिमाणमात्रेण नैव साधयितुं शक्यते इति स्फुटमेव । अतः शास्त्रीयार्थशास्त्रे मानवस्य समग्रव्यक्तित्वेन ग्रहणं, तथा च तस्य व्यवहारस्य उद्देशत्वेन लौकिकपारमार्थिकरूपस्य उभयविधस्य सुखस्य अवधारणम् इति वैशिष्ट्यद्वयम् अनुसंधार्यम् ।

मानवजीवनस्य परमोद्देशत्वेन चतुर्विधपुरुषार्थान् धर्मार्थकाममोक्षाख्यान् भारतीयतत्वशास्त्रम् अनुशास्ति । एते चत्वारः पुरुषार्थाः परस्परपूरकत्वेन नित्यव्य-वहारं निर्दिशन्ति । तत्र धर्मार्थकामाः लौकिकसुखस्य पूरकाः तदङ्गभूताश्च परिग-ण्यन्ते । शाश्वतपारमार्थिकसुखस्य अनुभवः मोक्षरूपपरमपुरुषार्थसाधनेनैव साध्यः इत्यपि शास्त्रम् अनुशास्ति । पाश्चात्यार्थशास्त्रं केवलम् अर्थकामानां निर्देशं व्यव-हारस्य मुख्योद्देशत्वेन विधाय, मानवस्य समग्रतापोषकव्यक्तित्वस्य चित्रणमेव विघटयति इत्यवगन्तव्यम् । तत्रापि अर्थीयमानवः आत्मनः सकलान् व्यवहारान् अर्थस्य परमावधिपर्यन्तम् अर्जनम् उद्दिश्यैव वृणीतु, तथा च अर्जितार्थस्य उपयोगः कामानां परमावधिपर्यन्तम् उपभोगाय क्रियताम् इत्यात्मकः बोधः नूनं धर्ममोक्ष-रूपपुरुषार्थद्वयस्य साधनाय नैव सहायकः प्रकल्पेत् इति विमर्शकानां मतं साधु एव । भारतीयार्थशास्त्रे अर्थकामानां सम्पादनमेव प्रतिषिद्धमिव वर्तते, अतः तत्र प्रतिपादितप्रमेयाः आधुनिकयुगे शीघ्रगत्या आर्थिकविकासोद्देशं साधयितुं मानव-सामान्यं नैव प्रेरयन्ति यतः कारणात् भारतदेशः अविकसितत्वदशायाः मोचनं प्राप्तुम् इतः पर्यन्तं नैव प्राभवत् इति केचन विमर्शकाः आक्षिपन्ति । तत् नैव साधु । भारतीयार्थशास्त्रे अर्थकामानां सम्पादनम् उद्देशत्वेन अवश्यं निर्दिष्टमेव । परन्तु एताभ्याम् उद्देशाभ्यां साकं धर्ममोक्षयोः मौलिकता अपि प्रतिपादिता । अर्थस्य अर्जनम् आवश्यककामानां पूरणार्थं, समाजे मानवधर्मस्य पोषणार्थमपि च

कर्तव्यम् । अर्थार्जनस्य उद्देशः केवलं कामानां पूरणम् इति प्रकल्पने, तथा च व्यवहारप्रवृत्त्यां एतादृशप्रकल्पनेन साकं सम्प्रवृत्तायां सत्याम्, असम्पूरितकामानाम् अनन्तपरम्परा एव महाभूत इव पुरतः आगत्य तिष्ठति । यथा यथा एकविधाः कामाः सम्पूरिता भवेयुः तथा तथैव अपरे वैविध्यपूर्णाः कामाः उद्‌भूताः भवन्ति । तेषां सम्पूरणार्थम् इतः ऊर्ध्वम् अर्थार्जनस्य कृते अधिकः प्रयासः करणीयः स्यात् । कामानाम् अनन्तत्वम्, अत एव तेषां सम्यक्तया पूरणस्य अशक्यता वर्तते इति भारतीयशास्त्रेषु सुष्ठु उद्‌घोषितं वर्तते । श्रीमद्‌भगवद्गीतायां मार्मिकरीत्या अयं विषयः सुष्ठु उपस्थापितः वर्तते । यथा—

**"आपूर्यमाणमचलप्रतिष्ठं, समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामाः यं प्रविशन्ति सर्वे न शान्तिमाप्नोति न कामकामी ॥"**

एवं निरन्तरं कामान् कामयमानः मानवः शान्तिं न आप्नोति इति भारतीयार्थशास्त्रस्य ऐतिह्यम् ।

पाश्चात्यार्थशास्त्रस्य अनुशासनानि अनुसृत्य गच्छन् मानवः एतादृशाशान्तेः पात्रं भूत्वा सुखात् वञ्चित इव भूयात् । भारतीयार्थशास्त्रं तु कामानाम् इयत्तावत्त्वं तथा च आत्मनः आवश्यकेषणानां पूरणं सम्पाद्य तदुपरि सम्पाद्यमानविभवस्य उपयोगं समाजस्य इतरेषां जनानाम् आवश्यकेषणानां पूरणाय कुर्यात् इति महत्तरं तत्त्वं प्रतिपादयति । कामसंयमः न तु कामविस्तारः भारतीयार्थशास्त्रस्य उदात्तः प्रमेयः ।

अर्थेन धर्मपोषणं, संयतकामपूरणम्, अन्ततः धर्मार्थकामानां यथायोग्यं सम्पादनेन आत्मानन्दानुभवरूपस्य मोक्षस्य सम्पादनमिति मानवसामान्यस्य जीवनध्येयं प्रतिपादितं वर्तते ।

### मानवधनस्य प्राशस्त्यम्

पाश्चात्यार्थसास्त्रे उत्पादनव्यवसायस्य आवश्यकसामग्रिषु मध्ये मूलधनस्य प्राथम्यं प्रदत्तं वर्तते । विकासशीलदेशेषु मूलधनसंग्रहस्य अल्पीयस्त्वात् तत्र विकासस्य गतिः मन्दा भवति । अतः शीघ्रतरविकासगतिसाधनार्थं जगतः इतरभा-

गेभ्यः मूलधनस्य आयातः करणीयः इति प्रतिपाद्यते । भारतीयार्थशास्त्रे तु मानवधनस्य तथा च कार्यमौलिकतायाः उत्पादनाङ्गसामग्रिरूपेण प्राशस्त्यं प्रदत्तं वर्तते । यदा श्रमिकवर्गः, कार्यनिष्ठा, दीर्घपरिश्रमप्रवृत्तिः, उत्पादकतावर्धने रतिः, कार्यनिर्वाहकैः साकं सामरस्यबन्धः, इत्यादिगुणैः भूषितः भवेत्, तदानीम् एव मूलधनविनियोगेन उत्पादनसौष्ठवं प्राप्तुं शक्यते। विकासशीलदेशेषु मानवधनस्य अभिवृद्ध्यर्थं विशेषरूपेण प्राथम्येन प्रयासः आवश्यकः वर्तते । मानवधनस्य सूक्तगुणविहीनत्वात् अधिकाधिकमूलधनविनियोगे कृते सत्यपि उत्पादनप्रमाणस्य तीव्रगत्या वृद्धिः नैव सम्पाद्यमाना वर्तते। भारतदेशः भारतीयशास्त्रनिर्दिष्टानि अनुशासनानि निर्लत्य पाश्चात्यार्थशास्त्रे प्रतिपादितान्, केवलं विकसितदेशेषु औचित्यपूर्णान् प्रमेयान् आलम्ब्य, तदनु विशेषतया मूलधनप्रमाणमेव प्राधान्येन परिगणय्य अपेक्षितपरिणामान् अलभमानः, विविधाभिः असमतोलताभिः परितप्तन् आस्ते ।

### कर्तव्याधिकारयोः विमर्शः

भारतीयार्थशास्त्रे, पाश्चात्यार्थशास्त्रे च मानवसामान्यस्य अधिकारावधारणं तथा च कर्तव्यविभावना इति विषयस्य विमर्शने परस्परवैलक्षण्यं दरीदृश्यते । पाश्चात्यार्थशास्त्रे श्रमिकवर्गस्य, कार्यालये कार्यकर्तृवर्गस्य, कार्यनिर्वाहकवर्गस्य च अधिकारावधारणस्य कृते प्राशस्त्यं प्रदत्तं वर्तते । अत्र श्रमिकवर्गेण सम्बद्धानां सर्वकारस्य नीतीनां विमर्शनप्रसङ्गे श्रमिकवर्गस्य सङ्घस्थापनसञ्चालनादिविषयेषु स्वातन्त्र्यं, वेतनस्थानस्य भद्रता, कल्याणयोजनादिषु पुरोगामिता, इत्यादिविविधाधिकारार्थं समीचीनावसराः प्रकल्पितव्याः इति वादः समुपस्थापितः वर्तते । श्रमिकवर्गेण आत्मनः कर्तव्यविषये अचला श्रद्धा प्रदर्शितव्या इत्यात्मकम् अवधारणं पाश्चात्यविचारधारामूलितप्रमेयेषु प्राशस्त्येन नैव निर्दिष्टमिति भाति । प्रायः पाश्चात्यसमाजपरिसरे सर्वोऽपि जनः उच्चस्तरमापन्नां कर्तव्यश्रद्धाम् आत्मनः स्वाभाविकप्रज्ञया एव प्रदर्शयति । तत्र श्रमिकवर्गस्य अधिकाराणां विघटनस्य भीतिः कार्यनिर्वाहकानां प्रबलतरकार्यनिर्वहणप्रणाल्या अधिका वर्तते इति मत्वा अधिकाराणाम् अवधारणं कर्तव्यावधारणापेक्षया अधिकप्रमाणेन कृतमिव भाति । परन्तु

विकासशीलदेशेषु जनसामान्यस्य आत्मनः कर्तव्यपालनविषये उत्तरदायितत्वस्य विभावना अधिकतया नैव जागर्ति । तादृशपरिसरे श्रमिकवर्गस्य केवलम् अधिकाराणाम् अवधारणे कृते सति कर्तव्यपरिपालनस्य विषये शिथिलता आपद्यते इति विकासशीलदेशानाम् अनुभवसिद्धो विषयः ।

पाश्चात्यार्थशास्त्रबोधितविचाराणां वैपरीत्येन भारतीयार्थशास्त्रे मानवसामान्यस्य कर्तव्यविभावनायाः प्राशस्त्यं प्रकल्पितं वर्तते । सर्वोऽपि जनः प्रप्रथमम् आत्मनः कर्तव्यं सम्पूर्णश्रद्धया, अचलनिष्ठया, निर्व्याजमनोभावेन परिपालयतु । कर्तव्यस्य फल प्राप्तिः, जनस्य अधिकाराणां गोपनम् इत्यादयः परिणामाः कर्तव्यपरिपालनेन अवश्यं सम्पाद्यन्ते इति भारतीयार्थशास्त्रे अवधारितं वर्तते । श्रीमद्भगवद्गीतायाम् एवम् उद्घोषितम्—

**"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इति ।**

भारतीयार्थशास्त्रम् इदमपि प्रबोधयति यत् सर्वोऽपि जनः आत्मनः कर्तव्यकर्मणि परमावधिदक्षतां साधयेदिति । कर्मणि कौशल्यप्राप्तिरेव योगः इति गीतावचनम् अत्र चकास्ति । भारतदेशः भारतीयार्थशास्त्रप्रमेयाननुमोद्य, श्रमिकवर्गस्य दक्षताभिवृद्ध्यै शिक्षणसंस्थाः, दक्षतासम्बद्धप्रणोदनानि इत्यादिकार्यक्रमान् अवश्यं योजयतु ।

## विभवस्वाम्यम्

उत्पादनविभवानां स्वाम्यं प्रत्येकं मानवे तिष्ठति अथवा समग्रसमाजहिताय समाजे तिष्ठति इति विषये पाश्चात्यार्थशास्त्रे, भारतीयार्थशास्त्रे च विभावनाभेदः विद्यते । पाश्चात्यार्थशास्त्रे व्यक्तिस्वाम्यं सर्वकारस्वाम्यमिति उभयविधं स्वाम्यं विभावितं वर्तते । पण्यप्रभावभावितविकासनिदर्शने व्यक्तिस्वाम्यस्य प्राशस्त्यम् अवधारितम् । समाजहितवादनिदर्शने तु विभवानां विशेषेण सर्वकारस्वाम्यं निर्दिष्टम् । व्यक्तिस्वाम्यविकल्पे प्रत्येकं व्यक्तेः अर्थीयविमर्शननिर्णयादिप्रसङ्गेषु विशिष्टं स्वातन्त्र्यं, तेन तत्र विशेषोत्साहश्च अवधारिते स्यातां । सर्वकारस्वाम्यविकल्पे तु एतादृशस्वातन्त्र्योत्साहादिगुणाः अर्थीयव्यवहारेषु नैव सम्भवेयुः । परन्तु

भारतीयार्थशास्त्रविचारधारायां व्यक्तिस्वाम्यं, समाजस्वाम्यम् इति उभयोरपि सूक्तं संमिश्रणं विभावितं वर्तते । भारतीयशास्त्रनिदर्शनम् ईशावास्योपनिषदि सुष्ठु प्रकटीकृतं वर्तते यथा हि "**अस्याः जगतः विभवः सर्वोऽपि ईशाधीनः । ईशः एव अस्य स्वामी । प्रत्येकं व्यक्तिः तावत्पर्यन्तं स्वाम्यं प्राप्तुमर्हति यावत् ईशेन निर्धारितम्, यावता च आत्मनः जीवननिर्वाहः प्रवर्तेत । इतः परं प्राप्यमानस्य विभवस्य स्वाम्यं तस्य व्यक्तेः नैव भवितुं शक्यते । एतादृशस्य निर्दिष्टविभवा-पेक्षया अधिकविभवस्य उपभोगः समाजस्य कल्याणाय एव प्रयोक्तव्यः न तु प्रत्येकं व्यक्तेः लाभाय**" इति अस्य निदर्शनस्य सारः ।

एतादृशे विभवस्वाम्यनिदर्शने व्यक्तिलाभः तथा च सामाजिकहितम् इत्य-नयोः परस्परासङ्गतत्वरूपसमस्या नैव उद्भवेत् यथा पाश्चात्यार्थशास्त्रनिदर्शने दृश्यते । यदि प्रत्येकं व्यक्तिः आत्मनः लाभस्य सीमानम् अत्यावश्यकजीवनसौक-र्यपरिपूरणं यावत् सङ्कल्प्य ततः परं प्राप्यमानस्य विभवस्य स्वाम्यं तस्य उपयोगं च समाजहिताय अर्पयति तर्हि स्वीयलाभसमाजहितयोः मध्ये परस्परविरोधस्य अवसर एव न उद्भवति ।

### उत्पादकताविस्तारः

उत्पादनसामग्रीणां तत्रापि श्रमिकानाम् उत्पादकतायाः परमावधिप्रापणं विकासगतेः अतिशीघ्रताप्राप्त्यै अत्यावश्यकमित्येतस्मिन् विषये न काऽपि शङ्का जागर्ति । परन्तु उत्पादकताविस्ताराय के वा उपायाः इति विषये पाश्चात्यार्थशास्त्र-निदर्शने भारतीयशास्त्रीयनिदर्शने च मतभेदः प्रतिभाति ।

पाश्चात्यनिदर्शने उत्पादकतावर्धनार्थं वेतनवृद्धिरूपः उत्तेजनक्रमः जीविकानिष्कासनरूपविभीषिकाक्रमश्च आवश्यके इति प्रतिपादितम् । सर्वका-रस्य श्रमिकोद्देशकनीतिः एवं निरूपिता भवेत् येन श्रमिकप्रवृत्तिनियमनार्थं श्रमिक-नियुक्तिकर्तृणां सविधे श्रमिकनियुक्तिश्रमिकनिवृत्तिरूपक्रमद्वयस्यापि स्वेच्छाधिकारः प्रदत्तः भवेत् । श्रमिकपण्ये श्रमिकाणां एकस्मात् व्यवसायादपरं प्रति गमनागमनं पण्यप्रभावनियतं सत् सुलभतया साध्यं स्यात् । तथा च श्रमिकहितगो-

पनम् उद्योगपतिव्यवसायधुरीणानां लाभार्जनोद्देशमनुलक्ष्यैव अनुशासितव्यम् इति निम्नलिखितानि पाश्चात्यनिदर्शनस्य श्रमिकपण्यसम्बद्धानि अनुशासनानि विशेषतः मूलधनपतीनां हितपोषणार्थं निरूपितानि इति प्रतिभाति । एतेषु श्रमिकः इतरोत्पादनसामाग्रीवत् एकं वस्तु इति विभावितमिव भाति । एतन्निदर्शने मानवीयताविभावनम् अतिशयेन लघूकुर्वत् श्रमिकस्य स्वयंस्फूर्तिप्रेरितां मौलिकताविभावनप्रचोदिताम् उत्पादकतावर्धनप्रवृत्तिं नैव अभिज्ञापयति ।

एतन्निदर्शनस्य व्यत्ययेन भारतीयार्थशास्त्रनिदर्शनं श्रमिकवर्गस्य मौलिकताविभावननिरूपितां कर्तव्यनिष्ठां कार्यदक्षतां च अभिज्ञापयत् तादृशप्रवृत्तेः उत्तेजनार्थं सूक्तोपायक्रमादीन् निरूपयति । तत्र श्रमिकस्य हितम् उद्योगपतीनां हितमिति हितद्वयस्य विरोधः नैवानुभावितः । उभावपि आत्मनः स्वस्वकर्तव्यपरिपालनमेव परमो धर्मः इति विभावयन्तौ उद्योगव्यवसायस्य प्रगतिमेव आत्मनः ध्येयत्वेन परिगणयन्तौ मनसः तृप्तिं साधयतः इति विभावितं वर्तते । कथं श्रमिकवर्गः आत्मनः स्वयंस्फूर्तिप्रचोदितकार्यप्रवृत्तिं साधयितुं प्रभवेदिति विषये अनेके क्रमाः अत्र सूचिताः वर्तन्ते । एते क्रमाः जनसामान्यस्यापि आत्मनः कार्यदक्षतायाः परमावधिं साधयितुम् उपयुक्ताः वर्तन्ते । प्रत्येकं मानवस्य नित्यव्यवहारस्य स्वरूपं निर्धारयतां सामग्रीणां मध्ये मूलभूतसामग्रीत्वेन परिगण्यमानाः सामग्र्यः तिस्रः विद्यन्ते । इन्द्रियाणि, मनः, बुद्धिश्च इति त्रीणि मूलभूततत्त्वानि मानवसामान्यस्य व्यवहारस्वरूपं निर्धारयन्ति । इन्द्रियाणां बाह्यवस्तुभिः साकं घटितेन सम्पर्केण अनेकानेकविचाराः मनसि उद्भवन्ति ।मनः परस्परविरुद्धानां सात्विकराजसतामसविचाररूपसैन्यानां युद्धक्षेत्रमिव सञ्जायते । बुद्धिस्तु तर्कबद्धविवेचनप्रवृत्तिम् उद्बोधयित्वा विचाराणां सङ्घर्षम् अपाकृत्य अन्ततः काञ्चन कार्यप्रवृत्तिं प्रेरयति । यदि बुद्धिः सात्विकलक्षणलक्षिता सती सात्विकविवेचनप्रसरम् उद्भावयति तर्हि अन्ततः सात्विककार्यप्रवृत्तिः प्रस्फुटीभवति । प्रत्युत यदि बुद्धिः राजसलक्षणैः तामसलक्षणैर्वा लक्षिता आस्ते तर्हि तत्तत्प्रकारककार्यप्रवृत्तिः व्यवहारपथमायाति । यदा श्रमिकवर्गस्य, किन्तु मानवसामान्यस्यापि कार्यदक्षतायाः परमावधिः साधनीयः वर्तते तदा तस्य बुद्धिः मौलिकतापरिपोषितसात्विकविवेचनसामर्थ्येन पुष्टा भवेत् ।

एवमेव कार्यनिर्वाहकजनस्यापि बुद्धिः सात्विकविवेचनप्रवृत्त्या भूषिता भवेत् । एतादृशपरिसरे कार्योत्पादकतायाः परमावधिप्रापणं स्वयंस्फूर्तिप्रचोदितम् अवश्यं सम्पन्नं स्यात् । तत्र प्रणोदनविभीषिकानां प्रयोगस्य आवश्यकता एव न उद्भवति इति भारतीयार्थशास्त्रस्य वादः ।

जापानीयोद्योगपरिसरे अपि कार्यसंस्कृतेः स्वरूपं मूलभूतप्रवृत्तिनियामकतत्त्वैः सम्पन्नमिव भाति । कार्यश्रद्धा, प्रवृत्तिसाङ्गत्यं, कार्यदक्षता इति त्रीणि लक्षणानि कार्यसंस्कृतेः स्वरूपम् इति जापानीयोद्योगविकासनिदर्शनस्य विमर्शकाः उद्घोषयन्ति । भारतीयार्थशास्त्रस्य विकासनिदर्शने अपि कार्यप्रवृत्तेः लक्षणानि एवमेव विभावितानि । कर्मसु कौशलं, कर्मसु निष्काममनोभावना, कर्मसु भक्तिः, कर्मसु भगवदाराधानानुसन्धानम् इत्यादीनि मौलिकतारूपितानि लक्षणानि विभाव्यन्ते । जनसामान्ये एतादृशप्रवृत्तिः समाजधुरीणानाम् आदर्शोदाहरणेन उद्बुद्धा भवेत् । तथा च उद्योगव्यवसायप्रशिक्षणसंस्थासु, श्रमिकवर्गस्य सङ्घसंस्थासु च उत्पादनसंस्कृतेः स्वरूपं तस्य व्यवहारीकरणस्य च उपायांश्च प्रशिक्षितुं व्यवस्था कार्या भवति ।

### सहकारप्रवृत्तेः प्रचोदनम्

पाश्चात्यार्थशास्त्रम् उत्पादकतायाः परमावधिसाधनार्थं, विभवविनियोगस्य च उत्तमोत्तमताप्रापणार्थं व्यवसायधूरीणानां मध्ये परस्परस्पर्धात्मकपरिसरः अत्यावश्यकः इत्यनुशास्ति । पण्यप्रभावभावितस्पर्धापरिसरे कार्यादक्षतायाः वृद्धेः अवकाशः विस्तारितः भूत्वा कार्यनिर्वाहे नैपुण्यं प्रवर्धेत इत्याशयः अत्र विभावितः । यः कोऽपि उद्योगपतिः आत्मनः व्यवसाये अक्षमः तिष्ठति सः क्षमतरात् अन्यस्मात् उद्योगपतेः व्यवसायभूमिकायाः एव निष्कासितः भवेत् । एतादृशनिष्कासनभीतिप्रचोदितः सः येन केनाप्युपायेन आत्मनः क्षमतां प्रवर्धयितुं महति प्रयासे उद्युक्तो भवेत् । अनेन प्रयासेन पूर्वम् अक्षमोऽपि अधुना इतरव्यवसायपतिवत् क्षमो भूत्वा व्यवसायजगति स्थिरताम् अवाप्नुयात् ।

अस्मिन् पण्यप्रभावनिदर्शने परस्परस्पर्धापरिसरस्य विभावितपरिणामाः तदैव प्राप्ताः भवेयुः यदा आर्थिकपरिसरः निर्दिष्टावधारणैः लक्षितः भवेत् । प्रथमं तावत् अर्थीयकर्तारः पण्यभावपरिसरस्य उत्तमोत्तमलाभम् आत्मसात्कर्तुम् आवश्यकैः वार्ताबोधैः सम्पन्नाः भवेयुः । स्पर्धापरिसरे यदि अर्थीयकर्तारः केचन विशेषवार्ताबोधसम्पत्तिमापन्नाः सन्ति, यदि अन्ये केचन अत्यल्पबोधसम्पत्त्या सीमितसामर्थ्याः भवन्ति, तर्हि स्पर्धापरिसरः अनुचितः सन् सर्वत्र दक्षताप्रचोदनरूपं परिणामं नैव प्रकल्पयेत् । तथैव यदि केषाञ्चन अर्थीयकर्तॄणां सविधे दूर-सम्पर्कसौकर्य, प्रवहणसौकर्यम्, इत्यादीनि सेवासौकर्याणि अन्यकर्तृभ्यः अधिक-तया सम्पन्नानि वर्तन्ते तर्हि एतादृशलक्षणलक्षितः स्पर्धापरिसरः अपेक्षितपरिणामान् नैव उद्भावयति । अनुचितस्पर्धाप्रवृत्तिलक्षिते परिसरे प्रबलतराः अर्थीयकर्तारः दुर्बलान् अर्थीयकर्तॄन् अवसादयितुं निस्त्रिंशम् अनेकाधर्म्यक्रमानपि व्यवहारीकु-र्वन्तः स्पर्धापरिसरम् अधिकाधिकं कलुषितं कुर्वन्ति ।

भारतीयार्थशास्त्रे स्पर्धापरिसरस्य वैपरीत्येन परस्परसहकारपरिसरस्य निदर्शनं जागर्ति । सहकारप्रवृत्तिनिदर्शनं प्राशस्त्येन प्रतिपादितं वर्तते । सहकारप-रिसरे अर्थीयकर्तारः वार्ताबोधं परस्परग् अवगमयन्तः सर्वाङ्गीणविकासम् आत्मनः ध्येयत्वेन निधाय उत्पादनवृद्धिं तीव्रतरगत्या साधयितुं प्रभवेयुः । परस्परसहकार-विभावननिदर्शने उत्पादनदक्षताऽपि सहकारव्यवहारेण एव परमावधिं प्राप्नुयात् न तु परस्परस्पर्धाप्रचोदितसङ्घर्षरूपिक्रमेण । स्पर्धानिरूपितपरिसरे एकः अर्थीय-कर्ता अन्यस्य कर्तुः अर्थीयसामर्थ्यं विघटयन् आत्मनः लाभांशस्य प्रवृद्धिं साध-यितुम् उद्युक्तो भवेत् । परन्तु सहकारनिरूपितपरिसरे एकः अर्थीयकर्ता आत्मनः अर्थीयसामर्थ्यस्य कार्यदक्षतायाश्च वर्धनेन साकं साकमेव सहकारभावेन अन्यस्य कर्तुरपि साहय्यम् उत्तेजनं च परिकल्पयन् तस्यापि कार्यदक्षताम् अर्थीयसामर्थ्यमपि वर्धयन्, समाजे आदायविभजनस्य असमताम् अन्याय्यताम् च विघटयितुं प्रभवेत् ।

सहकारविभावितनिदर्शनस्य मूलभूतत्वानि वेदोपनिषदादिषु शास्त्रग्रन्थेषु द्रष्टव्यानि । तैत्तरीयोपनिषदि एवम् उपदिश्यते **“वयं सर्वे मिलित्वा एव देशं रक्षामः । वयं सर्वे मिलित्वा एवम् भोगं भुञ्जामः । वयं सर्वे सहकारभावेन एव**

**समाजस्य सामर्थ्यं वर्धयामः"** इति । अथर्ववेदस्य निम्ननिर्दिष्टाः ऋचः अर्थपूर्णाः दरीदृश्यन्ते यथा **"सं जानामहै मनसा सञ्चिकित्वा मा युष्महि ।"** "वयं सर्वे सहकारप्रवृत्त्या ज्ञानार्जनं कुर्मः । वयं सर्वे अस्माकं विचारधारायाः सामरस्यं प्राप्नुवाम । वयं सर्वे सहकारभावेन स्वस्वकार्येषु प्रवृत्ताः भवाम । वयं सर्वे न कदाऽपि ईर्ष्याद्वेषहिंसादिविघातककार्येषु प्रवृत्ताः भवाम ॥" इति ॥

**सर्वेजनाः सुखिनो भवन्तु, वसुधैव कुटुम्बकम्** इत्यादिषु आभाणकेषु अपि सहकारविभावितनिदर्शनस्यैव बोधनं दरीदृश्यते ।

भारतदेशे तथा च अन्यविकासशीलदेशेषु सहकारविभावितविकासनिदर्शनस्य स्पर्धात्मकनिदर्शनस्य च उचितसंमिश्रणं दक्षतासाम्यविशिष्टवृद्धिसाधनाय सूक्तमिति आर्थिकविश्लेषकाणां मतम् ।

**कार्यनिर्वहणप्रणाल्यां वैशिष्ट्यम्**

कार्यनिर्वहणप्रणाल्यां कार्यनिर्वाहकस्य नेतृत्वयोग्यता, निर्देशकनिर्देशितयोः सम्बन्धस्य सौष्ठवं, सर्वेषामपि कार्यदक्षता इत्यादयः विषयाः विश्लेषणार्हाः तिष्ठन्ति । कार्यनिर्वहणपरिसरे कार्यनायकः कीदृशगुणविशिष्टः भवेत् इति प्रश्नः उद्भवति । कार्यनायकः आत्मनः कर्तव्यनिर्वहणे सम्पूर्णश्रद्धया प्रवृत्तः सन् मौलिकतायाः सर्वोच्चस्तरम् आत्मनः व्यवहारेषु अन्तर्भावयन् परिसरे स्थितेभ्यः सर्वेभ्यः कार्यकर्तृभ्यः आदर्शदृष्टान्त इव भूयात् इति भारतीयशास्त्रेषु निबोधितं वर्तते । श्रीभगवद्गीतायां श्रीकृष्णः एव कार्यनायकस्य मूलभूततत्त्वम् एवं प्रबोधयति—

**"यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति ।**

अत्र कार्यनायकः सर्वदा आत्मनः कार्यप्रवृत्तेः स्वयमेव विमर्शनात्मकावेक्षणं कुर्यादित्यपि अनुशासितम् ।

पाश्चात्यार्थशास्त्रनिर्दिष्टप्रणाल्यां तु कार्यनायकः इतरेभ्यः कार्यकरणविषये स्पष्टप्रेरणाः अनुशासनानि च विधातुं समर्थः भवेदिति तत्त्वं प्रबोधयति । सः प्रणोदनक्रमैः विभीषिकाक्रमैश्च सन्नद्धः सन् कार्यनिर्वहणस्य परमावधिदक्षतां साधयितुं

शक्नुयात् । तस्य आधीन्ये कार्यं कुर्वाणान् सर्वान् कर्मकरान् निष्ठुरनियमबद्धान् विधाय तेभ्यः परमावधिपर्यन्तं कार्यं निर्वाहयतु इत्यपि अनुशास्ति । तथा च कर्मकाराः सङ्घीभूय कार्यनिर्वाहणाधिकारिभिः साकं सन्धानवादं विधाय आत्मनः अधिकाराणां संरक्षणं बलात् साधयन्तु इत्यपि परिपाटी अत्र प्रतिपादिता वर्तते ।

भारतीयार्थशास्त्रे तु कार्यनिर्वाहकनायकः सात्विकगुणसम्पन्नः सन् इतरकर्मकारान् आत्मनः परिवारत्वेन भावयन् तान् स्वयम्प्रेरणाप्रवृत्त्या कार्यप्रवृत्तान् कुर्वाणः सर्वाङ्गीणदक्षतावृद्धिं साधयेत् इत्यनुशासितम् । कार्यनिर्वहणनायकः विनीतः, इन्द्रियजयसम्पन्नः, त्यागगुणशीलः, विषयतृष्णाविहीनः, धर्ममार्गप्रवृत्तिमांश्च भवेत् इति प्रतिपादितम् । कार्यनायकः अधिकारकर्तव्ययोर्मध्ये कर्तव्यविषये आत्मनः अटलश्रद्धां प्रदर्शयन्, इतरान् सर्वानपि स्वीयस्वीयकर्तव्य विषयेविशेषश्रद्धावतः कुर्वाणः स्वकर्तव्यपरिपालनेनैव स्वीयाधिकारपोषणम् अवश्यं भवति इत्यात्मकं तत्त्वं प्रस्थापयितुं समर्थः भवेत् । भारतीयशास्त्रनिदर्शने कार्यनायककर्मकाराणां सम्बन्धः परस्परसौहार्दपूर्णः बान्धव्यभावनाबद्धः उद्योगव्यवसायस्य आदायवर्धनध्येये पोषकः सन् चकास्ति ।

भारतीयविकासपथे कार्यनायकः भारतीयशास्त्रनिर्दिष्टानुशासनानि अनुसरतु येन समग्रव्यवसायरङ्गे कार्योत्पादकतावृद्धिः, देशादायस्य तीव्रगत्या वृद्धिः कार्यपरिसरे सङ्घर्षराहित्यं, कार्यनिर्वाहकश्रमिकयोर्मध्ये सौहार्दसम्बन्धः, सर्वत्रापि स्वीयकर्तव्यपरिपालनविषये अचलश्रद्धा इत्यादयः परिणामाः अनुभूतिपथमागच्छेयुः ।

## बहुमुखीनं निदर्शनम्

आर्थिकव्यवहाराणां परमोद्देशः अन्ततो गत्वा मानवसामान्यस्य कल्याणसाधनम् इत्यत्र न कोऽपि सन्देहः । परन्तु कथम् वा अयम् उद्देशः साधनीयः इति विषये भिन्नभिन्ननिदर्शनानि विभावितानि वर्तन्ते । आधुनिकार्थशास्त्रे मानवकल्याणस्य मुख्यसाधनम् अर्थः इति प्रतिपादितम् । यत् अनेके विकासशीलदेशाः आर्थिक विकासगतेः मन्दताम् अनुभवन्ति तस्य मूलकारणम् अर्थत्रिभवस्य

अपर्याप्तता इति प्रतिपाद्यते । परन्तु पर्याप्तप्रमाणेन विभवस्य प्राप्तिमात्रेण शीघ्रगत्या राष्ट्रादायस्य वृद्धिः भवेत् इत्यपि अवधारयितुं नैव शक्यते । विकासशीलदेशानां विकासानुभवस्य विश्लेषणेन इदं स्फुटीभवति यत् आर्थिकविभवस्य उत्तमावधिपर्यन्तं फलकारिरीत्या उपयोगं साधयितुम् अनेकेषां सहकारिसाधनानां, सांस्थिकव्यवस्थायाः सौष्ठवस्य च आवश्यकता वर्तते । आर्थिकविभवमात्रस्य साधनत्वेन अवधारणे कृते सति अनेके देशाः इतरेषां सहकारिसाधनानां विस्ताराय सौष्ठवसन्पादनाय वा नैव कार्यप्रवृत्ताः भवेयुः । अनेन न केवलम् आर्थिकविभवस्यापि उत्पादकता विघटिता भवेत् परन्तु विकासमार्गस्य प्रसर एव व्याहतः भवेत् । पाश्चात्यार्थशास्त्रानुशासनानि विना विवेकविमर्शनेन अनुसरन्तः देशाः एतादृशभग्नाशताम् अधिगच्छन्तः दरीदृश्यन्ते । मूलधनस्य अपर्याप्तताम् अनुसन्दधानाः देशाः विश्वधनागारादिसंस्थाभ्यः अन्ताराष्ट्रियमूलधनपण्यस्थानेभ्यश्च मूलधनम् अधिकवार्धुण्येन ऋणधनरूपेण गृह्णन्तः, अन्ताराष्ट्रियमूलधनोद्योगपतिभिश्च अधिकाधिकमूलधनविनिवेशनस्य सौलभ्यम् उत्तेजनम् च प्रकल्पयन्त दृश्यन्ते । परन्तु मूलधनस्य फलकारिरीत्या विनियोगः तदैव भवेत् यदा इतरसहकारिपोषकपरिसरः पूर्वभावित्वेन प्रतिष्ठापितः भवेत् । सहकारिपोषकपरिसरस्य कानि कानि लक्षणानि इति विषयमधिकृत्य विकासमार्गविश्लेषणात्मकप्रबन्धेषु चर्चा क्रियमाणा विद्यते । मानवकल्याणसाधनाय आवश्यकस्य सर्वतोमुखीनपरिसरस्य सूक्ष्मेक्षिकामण्डनं भारतीयशास्त्रनिबोधितनिदर्शने अतीवमार्मिकरीत्या विहितं वर्तते । निम्नलिखितानि कौटिलीयार्थसूत्राणि अत्र अवगाहनामर्हन्ति ।

**"सुखस्य मूलम् धर्मः । धर्मस्य मूलम् अर्थः । अर्थस्य मूलं राज्यम् । राज्यस्य मूलम् इन्द्रियजयः । इन्द्रियजयस्य मूलं विनयः । विनयस्य मूलं वृद्धोपसेवा । वृद्धोपसेवायाः मूलं विज्ञानम् । विज्ञानेनात्मानं विन्देत् ।"**

मानवकल्याणस्य साधनाय सर्वप्राथमिकत्वेन विभाव्यमानः उपायः धर्मः इत्यवगन्तव्यम् । धर्मः इत्यस्य समीचीनम् अर्थम् आधुनिकशब्दकोशरचयितारः नैव जानन्ति । सामान्यतः रूढिप्राप्तावगतिः अपि धर्मपदस्य नैजम् आन्तरिकं स्वरूपं नैव अभिज्ञापयति । शब्दकोशकाराः धर्म इत्यनेन पदेन, **हिंदूमुस्लिमक्रिश्चन्**

इत्यादि धर्मान् सूचयन्ति । धर्म इत्यनेन धार्मिककार्यक्रमाः नित्यनैमित्तिककार्याणि, सम्प्रदायाः आचारविचारनियमाः इत्याद्यर्थान् निर्दिशन्ति । परन्तु धर्म इत्यस्य शब्द-व्युत्पत्तिसम्पादितः मूलरूपः अर्थः अतीव स्वारस्यपूर्णः अर्थगर्भितः वर्तते । **'ध्रियते अनेन अधः पतन् पुरुषः'** इति धर्मः । **'धारयति'** इति धर्मः । **'धारणात् धर्म उच्यते ।'** एभिः व्युत्पत्तिप्रतिपादकैः वाक्यैः इदमवगम्यते यत् धर्म इत्यनेन मानवसामान्यस्य नित्यव्यवहाराणां सौष्ठवसम्पादनाय, अधःस्थात् मौलिकस्थानात् ऊर्जितं मौलिकं स्थानं प्राप्तुम् आवश्यकप्रवृत्तिसम्पादनाय च, अनुशास्तितानां नियमानाम् उपायानां च सङ्ग्रहः इत्यवगन्तव्यम् । सुखप्राप्त्यर्थं प्रत्येकं मानवः प्रप्रथमं स्वस्ववि-हितकार्येषु निष्ठा, श्रद्धा, पूर्णतया संयुक्तिः, कर्तव्यदक्षता, स्वार्थत्यागप्रवृत्तिः इत्या-दिगुणैः संशोधितमनोभावभूषितः भवेत् । एतादृशप्रवृत्तिं स्वयंप्रेरणया आत्मसात् कुर्वाणाः जनाः देशस्य सर्वाङ्गीणकल्याणसाधनाय प्राथम्येन परिगण्यमानविभव-रूपेण तिष्ठन्ति । अतः आर्थिकविभवसम्पादनात् प्रागेव अनुशासनसंशोधितमा-नवविभवस्य प्रतिष्ठापनम् अत्यावश्यकम् इति "सुखस्य मूलं धर्मः" इत्यात्मकं सूत्रम् अनुशास्ति ।

धर्मपरिपालनशीलमानवधनस्य विस्ताराय आर्थिकधनम् आवश्यकम् इत्यात्मकबोधं "धर्मस्य मूलम् अर्थः" इति सूत्रं प्रतिपादयति । आधुनिकार्थशास्त्र-प्रमेयाः सुखस्य मूलम् अर्थः इति मूलधनस्य प्राधान्यं प्रतिपादयन्ति । परं भारतीया-र्थशास्त्रं तु धर्मसंशोधितमानवधनस्य प्राधान्यम् अनुशास्ति । तादृशमानवधनस्य उत्पादनं पोषणं वर्धनं च आर्थिकधनेन साधयितव्यानि इत्याशयः । मूलधनस्य विनियोगेन मानवसामान्यस्य विद्यार्जनसौकर्याणि, आरोग्यपोषणाय भैषज्यसौल-भ्यानि, मौलिकतत्वानाम् अवबोधनार्थं सूक्तपुस्तकप्रकाशनं, शालासु पाठ्यक्रमे तात्विकविचाराणां विनिवेशनं, इत्यादयः क्रमाः योजितव्याः । मूलधनस्य विनियोगः उत्पादनव्यवसायेषु अवश्यं सम्पादनीयः एव । एतादृशविनियोगेन साकमेव धर्मप्रवृत्तिपरिसरस्य पोषणार्थं धनविनियोगः अवश्यं करणीयः इति प्रमेयम् इदं द्वितीयं कौटिल्यसूत्रं प्रतिपादयति ।

योग्योद्देशानधिकृत्य धनविनियोगस्य सम्पादनं, धनार्जनव्यवसायानां वृद्धिः इत्यादीनां परिणामानां साधनाय सूक्तराज्यव्यवस्था आवश्यकी इति "अर्थस्य मूलं राज्यम्" इति सूत्रं प्रतिपादयति । "राज्यम्" इत्यनेन पदेन पुरातनकाले राजा तथा च तस्य राज्यकार्यभारव्यवस्था, कराकरणव्यवस्था, जनकल्याणप्रवर्धनपरिपाटी, इत्यादयः सूचिताः भवन्ति । अधुनातनसमयस्य सङ्गतत्वेन तु, "राज्यम्" इत्यनेन, राजकीयव्यवस्था, सर्वकारनिर्वाचनपद्धतिः, सर्वकारस्य राजस्वसङ्ग्रहविनियोग-विषयकनीतयः, सर्वकारस्य प्रशासनव्यवस्था, इत्यादयः सङ्गृह्यन्ते । जनसार्वभौ-मसत्ता निरूपितव्यवस्थायां तु राजकीयपक्षाणां तन्नेतृणां, मन्त्रिपदेषु नियुज्यमानानां जनप्रतिनिधीनां च गुणवत्ता, मौलिकता, जनतासेवाप्रवृत्तिः इत्यादीनि लक्षणानि राज्यव्यवस्थायाः स्वरूपम् अभिज्ञापयन्ति । यदि राजकीयपक्षाः तन्नेतारश्च देशस्य, समाजस्य, जनसामान्यस्य च हितम् उपेक्षीकृत्य केवलम् आत्महितसाधनाय प्रवर्तन्ते, आर्थिकविकासनिदर्शनस्य चयनाविषये, आर्थिकनीतीनां व्यवहारीकरणप्र-सङ्गे दक्षतां दूरदर्शित्वं च न प्रदर्शयन्ति तर्हि तादृशराज्यव्यवस्था देशस्य मूलध-नसङ्ग्रहविस्ताराय नैव प्रकल्प्यते ।

सुव्यवस्थितराज्यव्यवस्थायाः प्रस्थापनं तदैव साध्यं भवेत् यदा राजकीय-पक्षाणां नेतारः इन्द्रियजयप्रवृत्त्या सम्पन्नाः भवेयुः । कौटलीयार्थसूत्रेषु चतुर्थं सूत्रं "राज्यस्य मूलम् इन्द्रिय जयः" इति । राजकीय व्यवस्थायाः स्वरूपं, मौलिकता, सौष्ठवम् इत्यादयः गुणाः न केवलं व्यवस्थापकानां नेतृणां च प्रवृत्तिस्वरूपम् अवलम्बन्ते परन्तु देशे स्थितानां सामान्यजनानामपि प्रवृत्तिस्वरूपम् अवलम्बन्ते । इन्द्रियजयप्रवृत्तिः मानवस्य चित्तसमतोलता प्राप्त्यै, व्यवहारसौष्ठवसम्पादनाय च आवश्यकी इत्येतत् सुस्पष्टमेव । "इन्द्रियजयप्रवृत्तिः" इत्यनेन उत्कोचदानग्रहणा-दिदुराचारैः अनाविष्टत्वम्, अधिगतसम्पदा सन्तृप्तिः, अन्यजनादायहरणे अनास्था, अनावश्यकोपभोगविषयेषु अरुचिः इत्यादयः प्रवृत्तयः अनुलक्ष्यन्ते । इन्द्रियजयप्र-वृत्तेः सम्पादनार्थं प्रत्येकं मानवः धर्माधर्मविवेचनसामर्थ्यं स्वीयकर्तव्यानुष्ठाने अच-लश्रद्धां, समाजहितसाधने स्वार्थत्यागविषये च दृढनिर्धारमनोभावं च सम्पादयेत् ।

इन्द्रियजयप्रवृत्तेः प्रचोदनं प्रत्येकं मानवे विनीतत्वस्वभावेन भवितुं शक्यते । अतः सूत्रितम् "इन्द्रियजयस्य मूलं विनयः" इति । विनयः औद्धत्यम् इति परस्परविरुद्धगुणौ स्तः । यदि शासनकर्मणि उद्युक्ताः जनाः राजकीयपक्षनेतारः, मन्त्रिपदेषु नियुक्ताः जनाश्च औद्धत्यप्रवृत्त्या व्यवहारं कुर्युः तर्हि तादृश परिसरे सारासारविवेचनस्य स्वार्थत्यागपूर्वकं समाजहितसाधनस्यापि अवसारः शिथिलीभूतः भवेत् । "विद्या विनयेन शोभते" "विनयो हि सर्वरसस्य भूषणम्" इत्यादीनि आभाणकानि अपि अत्र गमनार्हाणि । विनयाभावे, विनयप्रचोदितस्य इन्द्रियजयस्य अभावे च राज्यव्यवस्था अपि धर्माधर्मनियमबद्धा न भूत्वा राष्ट्रविभवस्य प्रक्षोभनकारणं सङ्गच्छेत इति अनेकदेशानाम् अधुनातनानुभवविश्लेषणेनापि विज्ञातं भवेत् ।

विनयमनोभावस्य प्रचोदनार्थं वृद्धानाम् आदरगौरवबुद्ध्या परिचर्या कार्या इति "विनयस्य मूलं वृद्धोपसेवा" इति सूत्रं प्रतिपादयति । ये वयसा, ज्ञानेन, अनुभवेन वा वृद्धाः सन्ति तेषां विचाराणां, विश्लेषणस्य, अनुशासनस्य च सम्माननं राजकीयसामाजिकनेतृभिः अवश्यं करणीयम् । तथा च वृद्धानां योगक्षेमाभिवृद्धयै सूक्तव्यवस्था राज्यशासनकारिभिः कार्या इत्यपि अत्र अनुशासितम् । यस्मिन् समाजे ज्ञानानुभवविहीनाः जनाः राज्यशासनं कुर्वाणाः सन्तः ज्ञानानुभवसम्पन्नानां जनानाम् उपेक्षां कुर्वन्ति, तादृशसमाजः शान्तिसमृद्धिसम्पन्नदशाम् आर्थिकाभिवृद्धिप्रणोदनपरिसरं च नैव साधयेत् । अतः समाजे तारतम्यव्यवस्थायां परस्परगौरवभावनाप्रचोदितः स्वस्वकर्तव्यपरिपालनपरिसरः स्थापनीयः । अस्यां व्यवस्थायाम्, उद्योगव्यवसायेषु कर्मकाराः कार्यनिर्देशकाश्च परस्परगौरवप्रेमभावनाभिः साकं व्यवहरन्ति । सर्वकारस्य कार्यालयेषु अवरस्थानस्थिताधिकारिणः उच्चतरस्थानस्थिताधिकारिभिः साकं विधिविहितक्रमम् अननुरुध्य व्यवहरन्ति । विद्यासंस्थासु च्छात्राः अध्यापकवर्गस्य सम्मानं, तथा च गृहेषु बान्धवाः यजमानस्य गौरवं पूर्णमनसा प्रदर्शयन्तः स्वस्वकर्तव्यानि श्रद्धया साधयन्ति इति विभावितं वर्तते । एवं समाजे विभिन्नस्तरेषु स्थितानां जनानां परस्परसौहार्दभावभावितः व्यावहारिकः सम्बन्धः समाजस्य देशस्य च कार्यदक्षतायाः परां काष्ठां प्राप्नोतुं शक्यतां प्रकल्पयेत् । एतादृशः सामाजिकसम्बन्धः एव सामाजिकसुव्यवस्थितताम् अवधारयति

इति *कन्फ्यूशयानिसम्* इति प्रथिते तात्त्विकनिदर्शने विभावितं वर्तते इति, तथा च कोरिया चीनाजापानादिदेशेषु एतादृशेन कन्फ्यूशयानिसम् प्रमेयावलम्बनेनैव उद्योगव्यवसायेषु विशिष्टकार्यदक्षता गतदशकेषु साधिता इति अर्थशास्त्रविमर्शकैः प्रतिपादितः वादः अत्र गमनार्हतां धत्ते ।

अन्ततः "वृद्धोपसेवायाः मूलं विज्ञानं" "विज्ञानेनात्मानं विन्देत्" इति सूत्रद्वये सर्वतोमुखसुखस्य मूलभूतः साधनसामग्रिः, विज्ञानं नाम वैज्ञानिक प्रवृत्तिः यया मानवः प्रत्येकं सारासारविवेचनपूर्वकम् अधिकाधिकज्ञानसम्पादनाय जिज्ञासाप्रणोदितः सन् उद्योगव्यवसायेषु नूत्ननूत्नोत्पादनपरिभाषाः संशोधयन् जनसामान्यस्य हितसंवर्धने दत्तावधानः सन् स्वीयकर्तव्यकर्मणि रतो भवेत् इत्यात्मकः मौलिकः सिद्धान्तः सावधारणं प्रतिपादितः वर्तते ।

समासतः विभावने कृते सति समाजस्य सर्वतोमुखीनसुखशान्तिसाधनाय सामाजिकराजकीयार्थिकसांस्कृतिकमौलिकदिरङ्गैः परस्परपूरकतया अनुबद्धं सामग्रिकनिदर्शनम् आवश्यकम् इत्यात्मकः मूलभूतप्रमेयः भारतीयशास्त्रविभावितविचाराणां सारत्वेन अभिव्यक्तो भवति इत्यवगन्तव्यम् ।

* * * *

द्वितीयं प्रकरणम्

# जवाहरलालनेहरूमहाभागस्य विचाराः

अधुना भारतीयार्थिकस्थितिः विविधाभिः समस्याभिः प्रक्षुब्धा वर्तते। एकतः राजकीयव्यवस्थायाः अनिश्चितता अशान्तिश्च। अन्यतः सर्वकारस्य बहुकालात् प्रचलिता आयव्यययोः असमतोलता। इतोऽप्यधिकतः बाह्यजगतः प्रचोदिताः अनेकविधाः असमतोलताकारकाः घटनाः। नूनं गमनार्हमेतत् यत् भारतदेशे गतचत्वारिंशद्वत्सरेभ्यः पञ्चवार्षिकयोजनाक्रमपरिपोषिताः अभिवृद्धिकार्यक्रमाः देशस्य आर्थिकबलम् अनितरसाधारणवैशिष्ट्यरीत्या दृढीकृतवन्तः। नवतितमदशके आपत्स्यमानानाम् आर्थिकाह्वानानां विश्लेषणम् इतः पूर्वतमदशकेषु सम्पादितम् आर्थिकविधानस्य परिवर्तनम् अनुलक्ष्य तथा च अशीतितमदशकस्य उत्तरार्धे आपन्नां सङ्कटपरिस्थितिं च मनसि निधाय करणीयम्।

विदितचरमेव यत् भारतदेशः राजकीयस्वातन्त्र्यसाधनानन्तरम् आर्थिकाभिवृद्धेः ध्येयं प्राथम्येन अङ्गीचकार। देशस्य कोट्यधिकप्रजानां अतिशोचनीयं तीव्रतमं दारिद्र्यं, असङ्ख्यजनानां निरुद्योगता, निर्विद्यतासमस्या, यन्त्रपरिभाषायाः अतिपुरातनता, कृष्युत्पादनस्य अपर्याप्तता, आयातनिर्यातयोः असमतोलता, अन्ताराष्ट्रियधनकोशस्य अपर्याप्तिसङ्कटम् इत्यादयः आर्थिकसमस्याः महाभूतानि इव देशं परिगृहीतवत्यः आसन्। स्वतन्त्रभारतदेशस्य प्रप्रथमप्रधानमन्त्रिपदधुरं सन्धरन् श्रीमान् पण्डितजवाहरलालनेहरूमहाभागः देशस्य आर्थिकाभिवृद्धिं त्वरितगत्या सर्वतोमुखेन साधयितुकामः पञ्चवार्षिकयोजनापरिपाटीं परिकल्पितवान्। जटिलसमस्यानां परिहारार्थं कीदृशो आर्थिकाभिवृद्धिपथः अनुसरणीयः इत्ययम् अर्थ-

शास्त्रसंशोधकानां, राज्यशास्त्रविदुषां, सर्वकारनीतिकारणां च तीक्ष्णतमचर्चाविषयः आसीत् ।

तदानीं द्वितीयजागतिकमहायुद्धानन्तरम् जगति कतिपयदेशाः बहुकालात् अनुभूतदास्यस्थितेः मुक्तिं प्राप्य राजकीयस्वातन्त्र्यं सम्पाद्य स्वकीयजनानाम् आर्थिकविकासस्य सर्वतोमुखीनहितवृद्धिसिद्ध्यै स्वस्वसामाजिकसांस्कृतिकैतिहासिकपरिसरमूलम् अनुलक्ष्य सूक्तोपायशोधने आतुरतया प्रवृत्ताः आसन् । विकसितदेशानां मध्ये स्पष्टतया द्वे अभिवृद्धिमार्गनिदर्शने आस्ताम् । एकतः अर्थप्रधानं पण्यनीतिप्रभावितं विकासनिदर्शनम् । अपरतः सर्वकारप्रथाप्रभावितं समाजहितप्रधानं विकासनिदर्शनम् । एतयोः मध्ये अर्थप्रधानं निदर्शनं पाश्चात्यदेशेषु अमेरिका जर्मनि युके आदिषु प्रचलितमासीत् । द्वितीयविधं समाजहितप्रधानं निदर्शनं भूतपूर्वः यु. एस्. एस् आर्. देशः पूर्वदेशीययुरोपस्थितेषु हंगेरि, पोलंड, आदिषु कतिपयदेशेषु स्वीकृतमासीत् । एतस्मिन् निदर्शने सकलानाम् उत्पादनसाधनानां स्वाम्यं सर्वकारे एव पूर्णतया निहितम् । सर्वे उत्पादनव्यवसायाः केन्द्रीयसर्वकारस्य उपक्रमेण तन्नियन्त्रिताः प्रचलन्ति । उत्पादितवस्तूनां, सेवानां च मौल्यानि क्रयविक्रयसन्तुलनप्रभावेण निर्दिष्टानि न भवन्ति । परन्तु सर्वकारेणैव निर्दिष्टानि भवन्ति । भारतदेशस्य सामाजिकसांस्कृतिकैतिहासिकपरिसरं सम्यक्तया जानन् नेहरूमहाभागः एतयोः आत्यन्तिकरूपयोः निदर्शनयोः समीचीनं सम्मिलनं भारतदेशस्य आर्थिकविकासस्य निदर्शनरूपेण स्वीकृतवान् ।

## आर्थिकविकासनिदर्शनम्

पञ्चाशदात्मकदशकस्य प्रारम्भ एव राजकीयस्वातन्त्र्यानन्तरमेव आर्थिकविकासोद्देश्यं विकासनीतीनां, विकासनिदर्शनस्य च निरूपणं कृतं किल । एतस्मिन् विषये देशस्य प्रथमप्रधानमन्त्रिणः श्रीनेहरूमहाभागस्य, राष्ट्रपितृत्वस्थानमापन्नस्य श्रीमहात्मागांधी महाभागस्य च विचारधारायाः प्रभावः सुष्ठु दरीदृश्यते । एतासां विचारधाराणां बोधः, विश्लेषणं च आदावेव आवश्कतया करणीये । निम्नलिखितवाक्यखण्डेषु नेहरू महाभागस्य विचारधारायाः प्रतिपादनविश्लेषणे क्रियेते ।

नेहरूमहाभागस्य आर्थिकदर्शनं भारतदेशस्य स्वातन्त्र्यसङ्ग्रामावसरे क्रमशः स्वरूपभागभवत् । तस्य सक्रमोद्भेदस्य आविष्कारस्य च परिचयः राष्ट्रीय-कांग्रेस् पक्षस्य वार्षिकाधिवेशनेषु प्रदत्तैः नेहरूमहाभागस्य भाषणैः अधिवेशननि-र्णयैश्च मतिपथमायाति । नेहरूजीवनविमर्शकैः कथ्यते यत् प्रप्रथमं १९२१ तमे वर्षे नेहरूमहाभागः अद्यतनीयोत्तरप्रदेशे (तदानीन्तनयुनायिटेड् प्रॉविन्सिस् प्रदेशे) ग्रामीणप्रदेशस्य सञ्चारावसरे तत्रत्यकृषकसमाजस्य अतिशोचनीयाम् आर्थिक-स्थितिम् अतिनीचस्तरमापन्नं जीवनविधिं च स्वयं स्वचक्षुषा साक्षात्कृत्य मतिं चकार यत् देशस्य आर्थिकाभिवृद्धिः राजकीयस्वातन्त्र्यसम्पादनध्येयेन साकमेव साधयितव्या इति । नेहरूमहोदयेन एतदपि दृष्टं यत् कृषिस्वामिनः कृषकान् अन्य-श्रमिकांश्च बहुविधैः असाधारणोपायैः शोषयन्ति येन कृषकाणां जीवनविधिः मान-वसामान्यस्यापि योग्यः न वर्तते । कृषिप्रधानभूते भारतदेशे कृषकाणां श्रमिकानां च संख्या समग्रजनसंख्यायां अत्यधिकांशा वर्तते । एतेषाम् आर्थिकशोषणं सामाजि-कावनतिश्च तदैव समाप्तिं गच्छेतां यदा एतेषाम् आर्थिकविकासः भविता । तथाच एतेषाम् आर्थिकविकासः तावत्कालं नैव भविता यावता कालेन एते कृषिस्वामिनां शोषणधुरः मोचिताः न भवेयुः ।

एवं नेहरूमहाभागस्य मनसि द्विविधस्वातन्त्र्यस्य ध्येयमासीत् । एकतः समग्रदेशस्य परकीयराज्यशासनात् मोचनम् । अन्यतः देशे एव स्थितेभ्यः शोषक-जनेभ्यः शोषितस्य जनसमुदायस्य शोषणपरम्परायाः मोचनम् । स्वातन्त्र्यद्वयस्यापि स्पष्टतया प्राथम्यत्वेनावगतावपि नेहरूमहोदयः विलक्षणरूपाम् आन्तरिकासङ्ग-तिभूयिष्ठां समस्याम् एकां संमुखीचकार । कृषिभूमिस्वामिनः भूयिष्ठधनस्वामि-नश्च कांग्रेसपक्षे प्रमुखशासनपदेषु उपस्थिता आसन् । न केवलम् एतेषां प्रभावः कांग्रेसपक्षस्य आन्तरिकशासनप्रणाल्यां भूयिष्ठः आसीत् परन्तु एते ब्रिटिशशासनेन साकम् अतिगरिष्ठसम्बन्धेनापि बद्धाः आसन् । एते च आत्मनः आर्थिकलाभ-स्वार्थसाधने बद्धादराः सन्तः देशस्य राजकीयस्वातन्त्र्यध्येयस्यापि त्यागे न चिरा-यन्ति यदि देशे स्वतन्त्रे सति एतेषां स्थानहानिः स्वार्थनाशश्च भवेताम् इति संशयः स्यात् । यदि आर्थिकशोषणतप्तानां जनानां स्वातन्त्र्यमपि ध्येयतया स्वीक्रियते,

बहिरङ्गतया उद्घोष्यते च तर्हि स्वार्थैकेषणानां कृषिस्वामिनां धनाधिपानां च सहकारः राजकीयस्वातन्त्र्यसाधनकर्मणि लुप्येत इत्यात्मकं भयं नेहरूमहाभागस्य मनसि उद्भूतमभूत् इव भाति। अत एव सः राजकीयस्वातन्त्र्यध्येयाय प्राशस्त्यं प्रदाय समाजहितप्रधानविकासनिदर्शनस्य कार्यरूपीकरणे पराङ्मुखोऽभवत्। अयमाशयः भारतीयन्याशनल् काँग्रेस् पक्षस्य १९२१ तमवत्सरे लाहोरपत्तने प्रवृत्ते वार्षिकाधिवेशने नेहरूमहाभागस्य भाषणेन सुपुष्टिमादधाति। नेहरूमहाशयेन एवमुक्तम्।

"मया स्पष्टतया अङ्गीकार्य यदहं समाजहितवादी जनतास्वाम्यवादी च अस्मि। राजादिषु नाहं विश्वसिमि। न च मे विश्वासः आधुनिकोद्योगपतिषु च ये साधारणजनानाम् अद्यतनजीवनविधेः भविष्यस्य च उपरि पूर्वकालीननृपचक्रवर्ति-संस्थानिकादिभ्योऽपि अधिकतरं निरङ्कुशप्रभुत्वं प्रभावं च धरन्ति तथा च येषां प्रवृत्तयः सामन्ताधिपानां प्रवृत्त्यपेक्षया अधिकतरम् उपद्रवकारकाः लुण्ठकाश्च भवन्ति।"

एवं समाजहितवाददर्शने वद्धादरोऽपि नेहरूमहाभागः तदानीन्तनप्रसङ्गे शोषितजनान्दोलनप्रचोदितं समाजपरिवर्तनम् अव्यावहारिकं भावयामास। पूर्वोक्तदिशा, काँग्रेसपक्षे एव कृषिस्वामिधनस्वामिहितैकवादिनः अनेके आसन् ये एतादृशसमाजपरिवर्तनस्य विरोधे दत्तदृष्टयः भवेरन् येन राजकीयस्वातन्त्र्यसाधन-पथे बाधा अवश्यं भविता। दूरदृष्टिचतुरेण नेहरूमहाभागेन समाजस्वाम्यनिदर्शनं भारतदेशस्य दीर्घकालिकध्येयमवश्यं भवितव्यमिति उद्घोषितम्।

अत्र नेहरूमहोदयस्य दृष्टिगोचरं समाजहितदर्शनं कीदृशमासीत्, तस्य व्यवहारस्वरूपं किंस्विदासीत्, कथं च तत् कम्युनिजं दर्शनात् दूरतोऽपास्तम् अवगन्तव्यं, कथं च तत् भारतदेशस्य सामाजिकसांस्कृतिकपरिसरस्य उचिततमं सत् अन्यासाधारणं चासीदित्यादि विषयाः विवेचनार्हाः।

१९३६ तमे वर्षे संप्रवृत्ते काँग्रेसपक्षीयाधिवेशने अध्यक्षीयभाषणं कुर्वाणः नेहरूमहोदयः आत्मनः गोचरितं दर्शनम् एवं स्पष्टीचकार—

"समाजहितवादः केवलम् आर्थिकविषयसम्बद्धं दर्शनमिति न बोद्धव्यम् । अयं सर्वेषां जीवनविधेः नियामकं तात्त्विकमौल्यबोधकं दर्शनमेव । दरिद्रतानिर्मूलनार्थम्, अपरिमितनिरुद्योगतायाः परिहारार्थं च, असङ्ख्यातभारतीयानाम् अवनतत्वस्थितेः करदीकृतत्वावस्थायाश्च मोचनं समाजहितवादस्य व्यवहारीकरणादृते नैव साधयितुं शक्यते । अनेन सूच्यते यत् स्वीयवित्तस्वाम्यत्वं यत्किञ्चित्सीमितोद्देशं विहाय अन्यत्र क्वचिदपि नैव सङ्गतम् इति अङ्गीकर्तव्यम् । तथा च अद्यतनीयस्वीयलाभप्रवृत्तिं विहाय समग्रसमाजहितसाधनरूपोदात्ततरप्रवृत्तेः प्रतिपत्तिरपि आवश्यकी । एतत्सर्वस्य तात्पर्यं च इदं भवति यत् अस्माकं समेषां जनानां सहजावबोधेषु नित्यप्रवृत्तिषु स्पृहाविधानेषु च महत् परिवर्तनम् अवश्यकम् । समासेन वक्तव्यं चेत् अद्यतनीयवित्तप्रधानव्यवस्थायाः अतिभिन्नः नूतनः शिष्टाचार एव व्यवहारीकरणीयः इति ।"

उपरितनवाक्यखण्डेन नेहरूगोचरितं समाजवाददर्शनं मार्क्सदर्शनेन साकम् अतिनिकटसाम्यं बिभर्तीति भाति । परन्तु नेहरूमहोदयः एव आत्मनः सिद्धान्तः मार्क्सवादसिद्धान्तात् अनेकविधैः भिन्नः इति स्वीयलेखनभाषणावसरेषु स्पष्टीकरोति । सः भारतदेशे आर्थिकरङ्गे समाजहितनिदर्शनस्य व्यवहारीकरणार्थम् अन्तर्वर्गसङ्घर्षं वा हिंसात्मकपरिवर्तनं वा अवनतवर्गैकाधिपत्यं वा नैवानुमोदते । समाजहितवादः व्यक्तिस्वाम्यं नैव बाधताम् इति आशास्ते नेहरूगोचरितसमाजवादः । सुभाषचन्द्रबोसमहाभागं प्रति लिखिते पत्रे नेहरूमहाभागः आत्मनः समाजवादसिद्धान्तस्य वैशिष्ट्यम् एवम् उद्घाटयति ।

"किमहं समाजवादी अथवा व्यक्तिस्वाम्यप्रतिपादकः ? समाजवादिता व्यक्तिस्वाम्यरूपावधारणद्वयेऽपि किमान्तरिकम् असङ्गतत्वम् आवश्यकम् ? अहं स्वस्वाभाविकप्रज्ञया अनुशासनेन च व्यक्तिस्वाम्यवादी अस्मि । परन्तु बौद्धिकप्रभावानुगुण्येन अहं समाजहितवादी अस्मि । अहम् आशासे यत् समाजवादः व्यक्तित्वविकासावकाशं नैव निरुणद्धि अथवा व्यक्तित्वमेव न निषूदयति । अहं समाजवाददर्शनेन आकृष्टोऽस्मि यतः समाजवाददर्शनस्य व्यवहारीकरणेन अनेके

अवनतवर्गीयाः जनाः आत्मनः आर्थिकरङ्गीयात् सांस्कृतिकरङ्गीयाच्च दासत्व-भावात् मोचनं प्राप्तुं शक्नुवन्ति ।"

अनेन विश्लेषणेन इदं स्फुटीभवति यत् नेहरूगोचरितसमाजवादसिद्धान्तः मार्क्ससिद्धान्तवित्तप्रधानादिसिद्धान्तेभ्यः संशोध्याकलितैः सूक्तप्रमेयैः सन्तुलितः मध्यस्थमार्गावलम्बनः अनन्यसाधारणः भारतदेशपरिसरस्य औचित्यपूर्णः सिद्धान्तः इति । अहो नेहरूमहाभागस्य वैदग्ध्यं भारतराष्ट्रनिष्ठा च ।

एवम् अन्तिमध्येये स्पष्टे सत्यपि काँग्रेस् पक्षस्य घटनायां समाजहितवाद-निदर्शनस्य निवेशनं राजकीयस्वातन्त्र्यप्राप्त्यनन्तरं १९६३ तमे वर्षे भुवनेश्वरे सङ्गते वार्षिकाधिवेशने एव कृतम् । तदानीं निम्नलिखितः निर्णयः अङ्गीकृतः ।

"भारतीयराष्ट्रीयकाँग्रेसपक्षस्य ध्येयम् एवं वर्तते । भारतदेशस्य समेषां जनानां क्षेमसाधनं सर्वतोमुखीनविकाससाधनं च, तथा शान्तिपूर्वकैः भारतीयसंविधानबद्धैः उपायैः तादृग्देशस्य निर्माणं यत्र समाजसाम्यबद्धः जीवनक्रमः लोकप्रतिनिधिसभानियन्त्रितः स्थापितः भवेत्, यत्र च सर्वेभ्यः समानप्रवेशाः अवकाशाः, समतालक्षणलक्षिताः राजकीयार्थिकसामाजिकाधिकाराश्च भवेयुः, यस्य उद्देशश्च सकलजगति शान्तिबन्धुत्वभावादीनां स्थापनं स्यात्" ।

नेहरूमहोदयेन समाजहितवादनिदर्शनं प्रथमं १९२९ तमे वर्षे लाहोरस्थले सङ्घटिते काँग्रेस अधिवेशने प्रतिपादितमासीत् । तदानीं स्वीयभाषणावसरे स्वीयाभिप्रायरूपेण उद्घोषितं ध्येयं १९६३ तमवर्षपर्यन्तं काँग्रेसपक्षस्य संविधानाङ्गध्येयप्रणाल्यां नैव निवेशितमासीत् । नेहरूविचाराणां समग्रतया अङ्गीकरणं तथा च तेषां राष्ट्रस्य आर्थिकसामाजिकपरिवर्तनकार्यक्रमावसरे व्यवहारीकरणं च लाहोराधिवेशनानन्तरं दशकत्रयानन्तरमेव समभूताम् इत्येतत् चित्रं खलु ।

भारतदेशस्य समाजसमतावादः स्वीयानितरसाधारणलक्षणैः लक्षितः सन् विकसितः अभवत् । भारतीयसमाजवादे आत्महितैकवृत्तखण्डं सार्वलौकिकवृत्त-खण्डं च उभावपि सहवर्तिनौ स्तः ।

अस्मिन् निदर्शने अधिकारस्य केन्द्रीकरणं नैवाभिप्रेतम् । प्रत्युत इदं निदर्शनं प्रत्येकं व्यक्तेः स्वीयहितरक्षणे आर्थिकरङ्गादिविषयेषु निर्णयग्रहणे स्वाम्यम् अङ्गीकरोति । उत्पादनव्यवसायेषु क्षिप्रतमाभिवृद्धिक्रमं, कार्यवैचक्षण्ये परां काष्ठां च अनुमोदति । तत्साकमेव उत्पादनफलस्य समाजस्य सर्वपरिच्छेदेषु समतातत्त्वमनुलक्ष्य सम्प्रविभागं च निर्दिशति । आदायाभिवृद्धिक्षमता, साम्यसम्प्रविभागश्च ध्येयद्वयत्वेन सन्निवेशितौ अस्मिन् निदर्शने । सामाजिकसमदर्शित्वं, समानावकाशता च अस्य निदर्शनस्य अवियोज्यलक्षणे स्तः । भारतीयसमाजवादः न केवलम् आर्थिकरङ्गे अभिवृद्धिम् अनुलक्षति किन्तु मानवसामान्यस्य सर्वतोमुखीनविकासं धर्मबद्धजीवनविधानं च निर्दिशति ।

**योजनापद्धतेः प्रारम्भः**

नेहरूमहाभागेन भारतीयविकासप्रणाल्यां योजनापद्धतिः विशेषतया विनिवेशिता । १९५१ तमे संवत्सरे प्रथमपञ्चवार्षिकयोजनाक्रमः राष्ट्रस्य विविधरङ्गेषु साध्यमानध्येयान्, साधकसामग्रीन्, नीतिक्रमांश्च निरूपयन् उद्घाटितः । प्रजासत्तात्मकराज्ये आर्थिकविकासोद्देश्यकयोजनाक्रमस्य परिग्रहः अनितरसाधारणसमस्याः परिकल्पयति । एकतन्त्रात्मकराज्ये योजनानिबद्धकार्यक्रमाणां व्यवहारीकरणं प्रायः सुलभतरम् । योजनासु निबद्धानाम् आर्थिकध्येयानां त्वरितगत्या समासादनम् एकपक्षाधिप्रत्ये देशे एव सुलभसाध्यमिति आर्थिकविकाससिद्धान्तपटुभिः प्रतिपादितं वर्तते । नेहरूमहोदयः एतत्प्रतिपादनं सम्यक्तया अजानात् । तथाऽपि सः एकपक्षस्वाम्यप्रधानं शासनप्रकारं भारतदेशे निवेशयितुं नैव विचारितवान् । नेहरूमहाभागः जनसत्तात्मकराज्यप्रणाल्यां सर्वतोमुखीनविकासस्य गतिः अवश्यं मन्दतरा भवेदिति जानन्नपि भारतदेशस्य आर्थिकविकासनिदर्शनं जनसत्तात्मकराज्यपद्धतिबद्धमेव भवितव्यमिति निर्धारितवान् ।

भारतदेशे पञ्चवार्षिकयोजनाक्रमः १९५१ तमे वर्षे प्रारब्धः । प्रथमपञ्चवार्षिकयोजनापत्रे कृषिरङ्गस्य विकासार्थं प्राशस्त्यं प्रदत्तं वर्तते । कृषिरङ्गस्य अवनतत्वस्थितिः प्रगल्भतमा आसीत् । भारतीयजनतायाः आर्थिकदैन्यदशा अतिशोचनीया आसीत् । औद्योगीकरणमार्गेण एव चिरादागतदारिद्र्यस्य परिहारः

भवितुं शक्यः इति नेहरूमहोदयस्य विश्वासः आसीत् । अतः द्वितीयपञ्चवार्षिकयोजनाकालादारभ्य गुरुतरोद्योगाभिवृद्धिप्रधानः विकासमार्गः स्वीकृतः । तस्मिन् समये विकाससिद्धान्तविदुषां मध्ये भारतस्य कः समीचीनतमः विकासमार्गः इति विषये महान् विवादः आसीत् । एके उपभोगवस्तूनाम् उत्पादने प्राधान्यं प्रतिपादयन् मार्गः भारतविकासार्थम् उचिततमः मार्गः इति युक्तिबलेन प्रत्यप्रादयन् । अन्ये केचन प्रत्यपादयन् यत् विकासमार्गस्य प्रारम्भदशायामेव गुरूद्योगानां प्रचोदनम् आवश्यकं उपभोगवस्तूनाम् उत्पादनायातयोः निग्रहः कार्यः, उत्पादनविभवानां विनिमयः गुरूद्योगानां कृते अधिकतया संपादनीयः इति । प्रथमोक्तं निदर्शनं वेतनोपभोग्यवस्तूत्पादनप्रधानम् इति निर्दिश्यते । द्वितीयं विकासनिदर्शनं गुरूद्योगप्रचोदनप्रधानम् इति सङ्केत्यते । यदि प्रथमं विकासनिदर्शनं व्यवहारीकृतं स्यात् तर्हि राष्ट्रियायस्य वृद्धिगतिः प्राथमिकवत्सरेषु तीव्रतरा भूत्वा भविष्यद्वत्सरेषु मन्दतां प्राप्स्येदिति प्रतिपाद्यते । अत्र कारणद्वयं वर्तते । वेतनोपभोग्यवस्तूनाम् उत्पादनक्रमस्य अवधिः अल्पा भवति । उत्पादनविभवेषु च मूलद्रव्यस्य अंशः अधिकः न वर्तते । एतन्निदर्शनस्य व्यवहारीकरणेन चिराय यन्त्रवस्तूनाम् आयातः प्रसज्येत । तथा च यन्त्रवस्तूनां यान्त्रिकज्ञानस्य च विषये आत्मनिर्भरता बहुकालपर्यंतं नैव साधिता अभविष्यदिति एतन्निदर्शनस्य विमर्शकानां वादः । द्वितीयं विकासनिदर्शनं प्रथमतः मन्दतरवृद्धिगतिं प्रचोदयत् सत् मध्यकालावध्याम् एव देशस्य यन्त्रवस्तूत्पादनसामर्थ्यं विस्तार्य एतद्विषये परदेशालम्बनं च विघटीकृत्य, तदनु राष्ट्रियायस्य वृद्धिगतिं तीव्रतरां करिष्यतीति एतन्निदर्शनवादिनां प्रस्तावनम् आसीत् ।

पूर्वनिर्दिष्टयोः निदर्शनयोः विमर्शकात्मकविश्लेषणं तदानीन्तनतज्ज्ञैः विशेषरूपेण कृतमासीत् । परन्तु अनयोः निदर्शनयोः कतमं देशस्य सर्वतोमुखीनविकासार्थं उचिततरमिति विषये इदमित्थमित्यात्मकनिर्धारणमतिः नैव प्रत्यभासत । तथापि देशस्य आत्मनिर्भरतालक्ष्यमनुलक्ष्य नेहरूमहोदयस्य नेतृत्वे द्वितीयं निदर्शनम् अङ्गीकृतं व्यवहारीकृतं च । द्वितीयपञ्चवार्षिकयोजनायां ये कार्ष्णायसयन्त्रप्रधानाः विकासात्मककार्यक्रमाः निवेशिताः ते सर्वे द्वितीयपञ्चवार्षिकविकासनिदर्शनस्य परिपाटीमनुसृत्यैव कृता इति स्फुटं भवति ।

नेहरूमहोदयः योजनापद्धत्यां दृढं विश्वसिति स्म । तस्य विचाराः राष्ट्रिय-विकासमन्त्रणसंसत्सु अनेकवारं प्रतिपादिताः विशदीकृताश्च । विशेषतः १९५४ तमे वर्षे सङ्गतायां राष्ट्रियविकासमन्त्रणसंसदि, तथा च १९५६ वर्षीयसंसदि च नेहरूमहोदयः स्वीयभाषणावसरे योजनापद्धतेः आवश्यकतां स्वरूपं च अधिकृत्य तद्विरोधिनां मतं निराकुर्वन् आत्मनः मतं विशदीचकार । नेहरूमहोदयः योजनाप-द्धत्यां निम्नलिखितगुणान् गोचरीकृतवान् ।

(१) योजनापद्धत्या राजनैतिकरङ्गस्य आर्थिकसामाजिकरङ्गाभ्यां साकं सङ्कलनं सामरस्यं च साधयितुं शक्यम् । लोकतन्त्रप्रणाल्यामेव पञ्चवार्षिकयोज-नागतोपायैः आर्थिकविकासाय समीचीनप्रणोदनानि उत्पाद्यन्ते यैः सर्वजनसहकार-प्रवृत्तयः समाजे समताप्रचोदककार्यक्रमाश्च आर्थिकविकासेन साकमेव अभिवर्ध्यन्ते ।

(२) अन्यतश्च, योजनाक्रमः नाम उत्पादनम्, उपभोगः जीविका, इत्येतेषां, विकासाङ्गतया आवश्यकानां, सञ्चारसम्पर्कसेवाः, समाजकल्याणसेवाः शिक्षाव्य-वस्था, स्वास्थ्यसेवा इत्यादीनां च परस्परपूरणोपयोगिक्रमेण संयोजनम् । योजना-क्रमे उद्देशाः तत्साधनोपायाश्च परस्परसम्बद्धक्रमेण एवम् उल्लेख्यन्ते येन राष्ट्रस्य आर्थिकविकासपथः उद्दिष्टदिशायामेव रचितः भवेत् । दीर्घकालीनोद्देशानां सद्यस्कोद्देशैः साकं सामरस्यमपि योजनाप्रणाल्या एव साधयितुं शक्यते ।

३) आर्थिकविकासहीनदशायाः आर्थिकसमृद्धिदशां प्रति राष्ट्रम् उन्नेतुम् उद्यमीकरणम् आवश्यकम् । उद्यमीकरणस्य प्रचोदनं गुरुतरोद्योगानां यन्त्रोत्पादनो-द्यमानां च प्रतिष्ठापनेनैव भवति । एवंप्रकारेण उद्यमीकरणस्य पथः वैचारिक-प्रणाल्यां संयोजनं व्यवहारीकरणं च योजनापद्धत्या एव साधयितुं शक्यते ।

४) सर्वजनस्वाम्यरङ्गः आत्मीयस्वाम्यरङ्गः इति उभावपि आर्थिकविकासपथे परस्परपूरणोपयोगितया अभिवृद्धिं प्राप्नुयाताम् । आर्थिकबलम् अधिकतया आत्मीयस्वाम्यरङ्गे न क्रोढीकृतं स्यात् । अर्थीयविषये एकाधिकाराः न रचिताः भवेयुः । योजनाप्रणाल्यामेव एतत् सर्वं साधयितुं शक्यते ।

नेहरूमहाभागस्य योजनाप्रणाल्यां धृतः विश्वासः सुष्ठु चिन्तितानां व्युत्पन्नविचाराणाम् आधारस्तम्भमाश्रित्य निबद्धः आसीत्। राष्ट्रहितदृष्ट्या योजनाक्रमः नूनम् अमोघं वरदानमिव वर्तते ।

## कृषिरङ्गस्य तथा ग्रामीणविकासस्य नीतयः

नेहरूमहोदयस्य आर्थिकविकासनिदर्शनं कृषिरङ्गस्य अभ्युदयं, ग्रामीणविकासं च राष्ट्रस्य सर्वतोमुखीनाभिवृद्धये मूलाधारत्वेन परिगणयति । नेहरूमहोदयः केवलं गुरुतरोद्यमानां मूलभूतयन्त्रोत्पादनस्य च विकासम् अनुलक्षितवान् परं कृषिरङ्गस्य अभिवृद्धिं ग्रामीणविकासं च अप्रधानत्वेन परिगणितवान् इति केचन विमर्शकाः दूषयन्ति । तन्न साधु । इदं न विस्मर्तव्यं यत् नेहरूमहोदयः प्रथमतः १९२१ तमे वर्षे देशस्य उत्तरभागे सञ्चरन् कृषकानां कृष्युद्यमस्य च हीनतमस्थितिं स्वचक्षुर्भ्यामेव दृष्ट्वा राष्ट्रस्याभिवृद्धिः कृषिरङ्गस्य ग्रामीणार्थिकस्थितेः अभ्युदयादृते नैव भवितुं शक्यते इति दृढं सङ्कल्पयामास । तदनु सः कृषिरङ्कस्य विकासार्थम् अनेकविधनीतीः स्वातन्त्र्यानन्तरं परिकल्पयामास । एतदपि सत्यं यत् नेहरूमहाभागः विश्वसिति स्म यत् भारतदेशः जगतः अन्यानेकदेशेभ्यः यन्त्रोद्यमरङ्गे, विज्ञाने, यन्त्रपरिभाषाविषये च अतीव अधःस्थाने वर्तते तथा च देशस्य दीर्घकालीनाभिवृद्धिः गुरुतरोद्योगानां विकासेन विज्ञानरङ्गस्य परिवर्तनेनैव भवितुं शक्यते इति । द्वितीयपञ्चवार्षिकयोजनायां १९५४-५५ तमवर्षादारभ्य गुरुतरोद्योगानां विकासमनुलक्ष्य अनेकविधार्थिककार्यक्रमान् प्रकल्पयामास व्यवहारीचकार च ।

अधुना बहुप्रथितं महालनोबिसनिदर्शनमपि गुरुतरोद्यमानां प्राधान्येन विकासमेव निर्देशयामास । परन्तु द्वितीयपञ्चवार्षिकयोजनायाः व्यवहारीकरणस्य प्रारम्भभागे एव विदेशमुद्रान्यूनतारूपः तीक्ष्णसङ्कटसमयः समापतत् । तदानीमेव वृष्ट्यभावनिमित्तं, कृष्युत्पादनपरिभाषायाः हीनतानिमित्तं च, कृष्युत्पादने तीव्रपतनमपि अनुभूतम् । अचिरादेव प्रारभ्यमाणे आर्थिकाभिवृद्धिपथे गुर्वी बाधा समागच्छत् । एतादृशकारणानि अनुलक्ष्य द्वितीयपञ्चवार्षिकयोजनासमयस्य आदिमवर्षे एव कृष्युत्पादनस्य प्राधान्यं स्वीकृतमेव आसीत् । तदानीं देशे एककाले एव अनेकविधानि सङ्कटानि समुद्भूतानि आसन् । कृष्युत्पादनस्य अत्यल्पत्वात्

अमेरिका-देशात् पि. एल्. ४८० व्यवस्थामनुसृत्य कृषिवस्तूनाम् आनयनम् आवश्यकं समभूत् । अनेन नेहरूमहोदयस्य मनसि कृषिरङ्गस्य अभिवृद्धिविषयमधिकृत्य विशेषचिन्ता दृढीभूताऽभवत् । आहारद्रव्यानां विषये राष्ट्रे आत्मनिर्भरता अचिरादेव कथञ्चित् साधयितव्या इत्यात्मकः नेहरूमहोदयस्य सङ्कल्पः समस्तं राष्ट्रं सचेतीचकार । कृषिरङ्गे कथं वा तीर्वगतिपरिवर्तनम् आनेतव्यम् इति प्रश्नः समुद्भूतः । कृषिरङ्गव्यवस्थायां कृषकानाम् आर्थिकदशायां च परिवर्तनात् ऋते उत्पादनगतेः मन्दता नैव परिहार्यते । कृषिरङ्गे बहुकालात् दृढं निबद्धाः जाड्यम्, उत्पादनपरिभाषायाः हीनता, भूमिकर्षकभूमिस्वामिसम्बन्धस्य अचारुता, कर्षणोपयोगिसामग्रीणां, ऋणधनरासायनिकपुरीषादीनाम् अपर्याप्तता, कृषकानाम् अधिकोत्पादनप्रवृत्त्यां अनास्था, असमर्थता च इत्यादयः दोषाः अवश्यं निस्सारणीयाः, एवमादिविचाराः अवगमनानि च नेहरूमहोदयस्य प्रचोदनेन सर्वकारस्य अधिकारिणां नीतिकाराणाम् अर्थशास्त्रज्ञानां जनसमान्यस्य च मनसि उद्बुद्धानि अभवन् । एतादृशोद्बोध एव आहारसामग्रीणाम् उत्पादनविषये आत्मनिर्भरतां मध्यमकालीनोद्देशत्वेन रचयामास ।

नेहरूमहोदयः कृषिरङ्गस्य ग्रामीणरङ्गस्य च सर्वतोमुखीनाभिवृद्ध्यर्थम् अनेकविधकार्यक्रमान् निरूपयामास । सहकारसङ्घरूपः सांस्थिकोपायः कृषिरङ्गे अत्यावश्यकत्वेन स्वीकृतः व्यवहारीकृतश्च । जनगणहितकारिप्रबन्धाः पञ्चायतीराज्यव्यवस्था च देशे सर्वत्र प्रकल्पिताः । ग्रामीणजनानां हिताभिवृद्धये विकासयोजना दिल्लीनगर्यां, प्रत्येकं प्रदेशीयराज्यानां राजधानीषु वा, न प्रकल्पितव्या इत्याशयः नितराम् अङ्गीकृतः । परन्तु ग्रामीणजनानां समेषां सहकारेण समुदायचिन्तनेन च ग्रामीणविकाससमस्यानां तत्परिहारोपायानां च पूर्वापरतां प्राधान्याप्राधान्याकरणं ग्रामस्थिताः समाजधुरीणाः, समाजहितैषिणः तत्रस्थतज्ज्ञा एव सम्यक्तया जानन्ति । अतः विकासयोजना ग्रामीणाभिवृद्धिम् उद्देशत्वेन प्रकल्प्य, तां साधयितुं तदैव शक्नुयात् यदा तादृशयोजना ग्रामं ग्रामसमुदायं च विशेषतया योजनाघटकत्वेन अनुलक्ष्य ग्रामीणजनतायाः भागग्रहणेन, सहकारेण च प्रकल्पिता व्यवहारीकृता च भवेत् ।

१९५५ तमे वर्षे एव, ग्रामः, ग्रामसमुदायः, मण्डलम्, इत्यादीनां योजनायां विशिष्टघटकत्वेन स्वीकृतिः सम्पादिता आसीत्। तथा च १९५८ तमे वर्षे बलवन्तरायमेहत-कमेटी इत्याख्यया कार्यसम्पादकसमित्या सूचिता पञ्चायतराज्य-प्रणाली राष्ट्रियविकाससभायां स्वीकृता। तदनु प्रत्येकं राज्यसर्वकारेभ्यः पञ्चायतराज्यप्रणालीं स्वीकर्तुं व्यवहारीकरणार्थं च विशिष्टविधिरचनायै निर्देशः केन्द्रसर्वकारेण प्रेषितः। १९५० तम दशकस्य उत्तरभागे एव अनेके राज्यसर्वकाराः एतादृशविधिरचनां कृतवन्तः। ग्रामपञ्चायतग्रामसभादयः विशिष्टसंस्थाः पञ्चायतराज्यपद्धत्याः मूलाधारत्वेन स्वीकृताः। ग्रामीणरङ्गाभिवृद्धये नियोजिताः एताः नीतयः नेहरूमहोदयस्य विचाराणां प्रभावं द्योतयन्ति।

ग्रामीर्णणालोकनस्य कथनं १९५४ तमे वर्षे कृतम्। एतस्मिन् कथने ग्रामीणविकासाय ग्रामस्तरे, ग्रामसमुदायस्तरे वा सहकारसङ्घाः स्थापनीयाः, विकास-कार्यक्रमाणाम् व्यवहारीकरणम् एतादृशसङ्घद्वारा एव साधयितव्यम् इति आशासनं कृतमासीत्। ग्रामीणसहकारसङ्घाः ग्रामपञ्चायतं च ग्रामीणविकासाय अत्याव-श्यकाः सांस्थिकोपायाः इत्यपि आशासितम्। नेहरूमहोदयः अनेकवारं प्रबोधयामास यत् एतादृशसंस्थानां निर्वाहः मुख्यतः ग्रामस्थनेतृभिः तत्रस्थतजैरेव कर्तव्यः न सर्वथा केन्द्रसर्वकारात् राज्यसर्वकाराद्वा प्रेषितैः प्रशासनाधिकारिभिः। जनसमुदायहिताभ्युदयसाधनक्रियाः ग्रामीणजनानां प्रबोधाय प्रकल्पितव्याः। अयम् उद्देशः तदैव साध्यते यदा ग्रामीणसंस्थानां निर्वाहः ग्रामीणजनैरेव क्रियते इति नेहरूमहोदयस्य वादः साधुरेव। तस्य विश्वासः आसीत् यत् अधिकारस्य सम्यक्तया विकेन्द्रीकरणं विना ग्रामीणजनेषु विकासकार्यक्रमसहभागित्वप्रज्ञा नैव जागृता भवेदिति। यद्यपि देशे केन्द्रीययोजनाप्रणालीं नेहरूमहोदय एव प्रारब्धवान् तथापि तस्य योजनानिदर्शनम् अत्यधिककेन्द्रीकरणं नैवानुमोदते स्म। प्रत्युत विकेन्द्रित-स्तरे प्रकल्पितानां विकासकार्यक्रमाणां समाहारः एव केंद्रीययोजना भवितुमर्हति इत्यात्मका उपपत्तिः नेहरूयोजनासिद्धान्तस्य तत्वमासीत्।

आहारसामग्रीणाम् उत्पादने आत्मनिर्भरता अन्ततः साधिता वर्तते। देशे प्रतिवर्षं कृष्युत्पादनानाम् आयातस्य आवश्यकता नैव भवति यथा पञ्चाशत्तमे दशके

भवति स्म । यदा वर्षाभावादिविशिष्टिकारणैः कृष्युत्पादने महत् पतनं भवति तदानीम् एव आवश्यकपरिमाणेन कृषिवस्तूनाम् आयातः क्रियते । प्रत्युत केषुचन वर्षेषु कृषिवस्तूनां निर्यातः अपि साध्यते । अनेन विश्लेषणेन इदं स्फुटं भवति यत् नेहरूमहोदयस्य आर्थिकविकासनिदर्शने कृषिरङ्गस्य उपेक्षा कृता इत्यात्मकः कैश्चन सूच्यमानः आरोपः नैव साधुः इति । यदि अधुनाऽपि कृषिरङ्गे विशेषतया साधनीयाः विषयाः अवशिष्टाः वर्तन्ते तेषां द्वे कारणे वर्तेते । एकतः कृषिरङ्गस्य समास्यानां गुर्वी जटिलता । अन्यतः नीतीनां कार्यक्रमाणां च व्यवहारीकरणे अनुभूता शिथिलता अक्षमता च । कृषिरङ्गस्य समस्याः अस्य प्रबन्धस्य अन्यस्मिन् भागे चर्चिताः वर्तन्ते इत्यलमिदानीम् ।

**विज्ञानयन्त्रपरिभाषाविषयकविकासः**

नेहरूमहोदयस्य मनसि दृढः विश्वासः आसीत् यत् देशस्य आर्थिकविकासः विज्ञानयन्त्रपरिभाषाविषयकविकासम् अवलम्बते इति । सः स्वयं विज्ञानशास्त्रस्य विद्यार्थी आसीत्, विज्ञानशास्त्रे एव पदवीं च प्राप्नोत् । विज्ञानस्य असाधारणशक्यतां सः वारं वारं प्रशंसति स्म । १९३८ तमे वर्षे सङ्गते अखिलभारतीयविज्ञानसदसि प्रेषितः नेहरूमहोदयस्य शुभकामनासन्देशः तस्य विज्ञानविषयकदृढप्रत्ययं प्रत्याययति । —"यद्यपि अहं चिरात् राष्ट्रियराजनैतिकरथात् कर्षितः राजनैतिकदासेयः अस्मि, येन मे अन्यविषयकचिन्तने अवसरः अपि नैव लभ्यते, तथापि मम मनः अभीक्ष्णं मम विद्यार्थिदशादिनानि स्मरति यदा अहं विज्ञानशास्त्रस्य विद्यार्थी सन् विज्ञानशास्त्रस्य जन्मस्थानीभूते केँब्रिज् विश्वविद्यालये तत्रत्यप्रयोगशालासु चिकित्सकमनोवृत्त्या तत्त्वशोधने आसक्तः आसम् । यद्यपि विद्यार्थिजीवनानन्तरं मम जीवनवृत्तिः विज्ञानशास्त्रात् बहुदूरतः अपसृता, तथापि मम मनोवृत्तिः वारं वारं विज्ञानशास्त्रं प्रत्येव प्रतिनिवर्तते । अधुना मम अयं दृढप्रत्ययः सञ्जातः वर्तते यत् विज्ञानशास्त्रं न केवलं हृदयङ्गमं रोमाञ्चकारि च शास्त्रं, किन्तु समग्रमानवजीवनस्य आधारभूतं जीवनविधावेव नवीनताप्रेरकं शास्त्रीयविचारसम्पुटमिव वर्तते । निर्धनताक्षुधादिबाधायाः निवारणं, निरक्षरतायाः अपसृतिः, स्वास्थ्यक्षोभकपरिसरस्य परिहारः, मूढविश्वासप्रवृत्तेः सम्प्रदायाचार-

किङ्करतायाश्च दूरीकरणं, देशगतविभवस्य निरर्थकापचयप्रापकप्रवृत्तीनां निवृत्तिः इत्यादयः उद्देशाः विज्ञानशास्त्रस्य साहाय्येनैव साधयितुं शक्यन्ते इति विषये न कोऽपि संशयः । देशस्य भविष्यं तानेव अवलम्बते ये विज्ञानशास्त्रेण साकं सख्यं सम्पादयन्ति" इति ।

जवाहरलालनेहरूमहोदयः विज्ञानशास्त्रस्य, यन्त्रपरिभाषाशास्त्रस्य च महत्तां विशेषतया अनुमोदते स्म । भारतीयविज्ञानसंसत्सु प्रायः प्रतिवर्षं सः सभायाः उद्घाटनकार्यस्य आमन्त्रणं स्वीकृत्य वैज्ञानिकैः सह संमिलति स्म । सः विज्ञानसम्बद्धेषु संशोधनविकाससंस्थानां, प्रयोगशालानां च उद्घाटनकार्येषु, तत्सम्बद्धभवनानाम्, आदिमशिलान्यासादिकार्यक्रमेषु च बहुवारं मुख्यातिथिरूपेण गच्छति स्म, भाषते स्म, विज्ञानतज्ज्ञैः साकं स्वच्छन्दं मिलित्वा विज्ञानशास्त्रं भारतीयविकासयोजनायां कथं वा उपयोक्तव्यमिति विषये, विज्ञानप्रपञ्चे कानि कानि नूतनपरिवर्तनानि शोधितानि इति विषये च चर्चयित्वा अनेकविकासोपयोगिकार्यक्रमान् आत्मनः मनसि निरूपयति स्म । नेहरूमहोदयस्य दृढं मतमासीत् यत् विज्ञानं मानवकुलस्य हितसंवर्धनायैव उपयोक्तव्यं न तु तस्य विनाशकारिवस्तूनाम् उत्पादनाय युद्धप्रचोदनाय, समाजस्य दुर्बलजनकुलस्य तथा अल्पशक्तिकराष्ट्रस्य शोषणाय वा ।

नेहरूमहोदयस्य प्रगल्भदूरदृष्टिसन्तुलितनेतृत्वेन भारतदेशे अत्याधुनिकविज्ञानशास्त्राणाम् अध्ययनाध्यापनसंशोधनादिकार्येषु महत् परिवर्तनं सम्पादितं वर्तते । परमाणुशक्तिनिर्मितविद्युच्छक्तिकार्यक्रमस्य, अन्तरिक्षशास्त्रे अध्ययनसंशोधनादिकार्यक्रमस्य च प्रारम्भः, विस्तारश्च नेहरूमहोदयस्यैव विज्ञानविषये प्रवृत्तम् असाधारणोत्साहम् आसेधं च द्योतयतः । तदानीमेव देशे यन्त्रकलाभिज्ञानां योजनाकार्यक्रमेषु ज्यायस्तरम् अर्थनं सञ्जातमिति निमित्तेन देशस्य नानाभागेषु अनेकाः यन्त्रशास्त्रस्य अभ्ययनाध्यापनसंस्थाः प्रारब्धाः । अधुना नवतितमदशके विश्वस्य प्रत्येकं राष्ट्रे गतानां विज्ञानयन्त्रशास्त्रज्ञानां संख्यायाः गणनां कृत्वा, एतत्संख्यामनुसृत्य देशानां पङ्क्तिक्रमेण न्यासे कृते सति, भारतदेशः षष्ठं सप्तमं

वा स्थानमवाप्नोतीत्येतत् नूनं प्रशंसार्हम् । एतत् पञ्चाशत्तमे, षष्ठितमे च दशके एव विज्ञानयन्त्रशास्त्राणां महत्ता नीतिकारैः स्वीकृता इत्यात्मकं विषयं नितरां पोषयति ।

विज्ञानशास्त्रस्य महत्तां देशे प्रत्याययितुं तथा च पूर्णतया विकासकार्यक्रमेषु विज्ञानस्य प्रयोगं प्रचोदयितुम् अनेके उपायाः, नीतयः कार्यक्रमाश्च विभाविताः व्यवहारीकृताश्च । नेहरूमहोदयस्य प्रेरणया १९५८ तमे वर्षे मार्चमासस्य चतुर्थे दिनाङ्के भारतसर्वकारेण विज्ञाननीतिसङ्कल्पः स्वीकृतः । अनेन सङ्कल्पेन भारतदेशे विज्ञानाभ्युदयस्य शिलान्यासः स्थापितः इति कथयितुं शक्यते । अस्य सङ्कल्पस्य मूलग्रन्थे प्रारम्भे एव लिखितानि कतिपयवाक्यानि अत्यन्तं गमनार्हाणि एवम् वर्तते—

"देशस्य अभिवृद्धेः तालीस्थानापन्नेषु उपायेषु जनतायाः कार्योत्साहः अवश्यत्वेन परिगणितव्यः । परन्तु अन्यतः, उत्पादनपरिभाषा, उत्पादनवस्तूनि, मूल-धनं इति त्रयाणां विकासघटकवस्तूनां फलोत्पादकरीत्यां सम्यक्तया समन्वयः प्रधानोपायत्वेन सम्भाव्यते । एतेषु त्रिषु घटकेष्वपि उत्पादनपरिभाषा सर्वतः प्रधानस्थानमर्हति । जगति विज्ञानशास्त्रप्रचोदितानां नूतनपरिभाषाणां संशोधनसम-यादारभ्य उत्पादनपरिभाषायाः प्राधान्यं विशेषतया अवगतं स्वीकृतं च । नूतनानाम् उत्पादनपरिभाषाणां व्यवहारीकरणेन उत्पादानवस्तूनां मूलधनस्य वा न्यूनताम् अपाकर्तुं शक्यते । परन्तु नूतनानाम् अधिकोत्पादकतालक्षितानाम् उत्पादनपरि-भाषाणां संशोधनं, अभिव्यक्तिः संवर्धनं च विज्ञानशास्त्रस्य अध्ययनेन संशोधना-दिना एव साधयितुं शक्यन्ते" ।

"अस्य विंशतितमशतकस्य प्रारम्भादेव विज्ञानशास्त्रम् अतीव त्वरितगत्या प्रवर्धमानं वर्तते । परन्तु विज्ञानशास्त्रस्य नूतनसंशोधनोपायानां व्यापकरीत्या व्यवहारीकरणेन विकसितदेशानां विकासशीलदेशानां च मध्ये आर्थिकविवरं प्रवर्धमानमेव वर्तते । यदा विज्ञानशास्त्रस्य अध्ययनसंशोधनादिकार्येषु भूयिष्ठः प्रयासः क्रियते तदैव इदम् आर्थिकविवरं व्यूनीकर्तुं निवारयितुं च शक्यते । भारतं महान् देशः । अत्र विदग्धतायाः परम्परा, स्वतन्त्रविचारविमर्शने प्रवृत्तिः, सांस्कृतिक-परम्परायाः गरिमा इत्यादयः नितरां श्लाघनीयाः गुणाः विद्यन्ते । एतादृशः अस्माकं

भारतदेशः आधुनिकविज्ञानशास्त्रस्य प्रगतिमार्गे पूर्णतया भागं गृह्णातु यतः अद्यत्वे समस्तविश्वे विज्ञानशास्त्रस्य प्रवर्धनं मानवकुलस्यैव हिताय श्रेष्ठः व्यवसायः सञ्जातः वर्तते" इति ।

निम्नलिखितः उद्बोधप्रगल्भसङ्कल्पः नेहरूमहोदयस्य होमीभाभा आदिविज्ञानतज्ज्ञैः साकं दृढं बद्धेन सख्येन प्रचोदितः सन्, भारतदेशस्य विज्ञानाभिवृद्धिमन्दिरस्य आदिमशिलान्यास इव आसीत्। इतः पूर्वमपि स्वातन्त्र्यादर्वागेव अनेकवारं नेहरूमहोदयः आर्थिकविकासार्थं विज्ञानस्य महत्ताम् आत्मनः भाषणावसरेषु प्रकटीकरोति स्म । १९६८ तमे वर्षे सङ्गतायां राष्ट्रिययोजनाकार्यसम्पादकसभायां, अध्यक्षस्थानमलङ्कुर्वन् एवम् उद्घोषयामास—"यदि भारतदेशः उद्योगाभिवृद्धिमार्गे त्वरितगत्या गमनं साधयितुं उद्दिशति तर्हि त्रयः मूलभूताः विषयाः अवश्यम् अवधारणम् अर्हन्ति—गुरुतरयन्त्रविज्ञानं यन्त्रोत्पादनव्यवसायश्च, विज्ञानशास्त्रसंशोधनसंस्थाः, तथा च विद्युच्छक्तिः, एतेषां त्रयाणाम् अभिवृद्धिः एव देशस्य योजनाकार्यक्रमस्य उपष्टम्भत्वेन अङ्गीकर्तव्या"इति ।

अधुना विज्ञानशास्त्रीयमनोवृत्तिः इत्यात्मकः विचारः सर्वत्र सामान्यत्वेन अवगतः वर्तते । अस्य बोधस्य प्रथमतः आविष्करणं नेहरूमहोदयेन एव कृतम् इति बहुशः अनेके न जानन्ति । नेहरूमहोदयः एकदा एवं प्रख्यापयामास—"विज्ञानं नाम केवलं प्रयोगशालासु विमर्शनालिकावलोकनं वा कतिपयवस्तूनां संमिश्रणं तल्लक्षणाध्ययनं, वा, अनेकनूत्ननूतनवस्तूनाम् उत्पादनं वा इति नैव अवगन्तव्यम् । विज्ञानं नाम अन्ततः चित्तस्य प्रवृत्तेः तादृशं शिक्षणं येन समग्रजीवनस्य व्यवहार एव विज्ञानप्रचोदितपद्धत्या प्रवर्तेत । वैज्ञानिकपद्धतिः स्वाभाविकजिज्ञासां, कूलङ्कषपरीक्षणपूर्वकनिर्धारप्रवृत्तिं, व्युत्पन्नमत्या यथार्थनिष्ठचिंतनं, जीवनव्यवहारस्य सर्वस्तरेषु प्रचोदयति" इति । नेहरूमहोदयः दृढं विश्वसिति स्म यत् यदा देशे सर्वजनेषु वैज्ञानिकचित्तप्रवृत्तिः उद्भाविता भवेत् तदैव सङ्कुचितमनोभावस्य, अन्धविश्वासप्रवृत्तेश्च जनतायाः निष्कासनं भवितुं शक्यते तथा च प्रत्येकं पौरलोकः आत्मनिर्भरतां, अधिकोत्पादकतां, कार्यक्षमतां च आत्मसात् कर्तुं प्रभवतीति । सः इच्छति स्म यत् देशे सर्वेषु जनेषु कौतूहलप्रवृत्तिः, नवाचारस्थापने परिश्रमोत्साहौ, कठि-

नतराह्वानस्वीकारे धार्ष्ट्यम् इत्यादयः गुणाः स्वाभाविकरीत्या प्रवर्धेरन्निति । एतदर्थं सः विज्ञानशास्त्रशिक्षणस्य वैज्ञानिकसंशोधनस्य च परमोत्तेजनं प्रदत्तवान् । नेहरू-महोदयस्य परोक्षप्रेरणया एव न केवलं शालासु विज्ञानशास्त्रशिक्षणस्य व्यवसायः उत्तेजितः अभवत् किन्तु देशे उच्चतमस्तरे विज्ञानशिक्षणसंशोधनादीनाम् अनुकूलताप्रापणार्थं प्रोत्साहनार्थं च अनेकाः भारतीयविज्ञानपरिभाषासंस्थाः, यन्त्रविज्ञान-शिक्षणसंस्थाश्च प्रारब्धाः । देशे उच्चतरप्रावीण्यानां वैज्ञानिकानां परिभाषातज्ज्ञानां च परस्परविचारविमर्शनार्थम्, उच्चस्तरसंशोधनप्रोत्साहनार्थं च अनुकूलताकल्पनम् एतादृशसंस्थानां मुख्योद्देशः आसीत् येन देशः विज्ञानपरिभाषाविषये आत्मनिर्भरतां प्रति अचिरादेव तीव्रगत्या प्रवर्तयेत् ।

विज्ञानशास्त्रस्य सामर्थ्यं मानवकुलस्य हितसंवर्धनाय विश्वे शान्तिस्थापनायैव उपयोक्तव्यमिति नेहरूमहोदयः वारं वारं सर्वान् स्मारयति स्म । भारतदेशे अणुशक्त्युत्पादनकार्यक्रमे प्रारब्धे सत्यपि अणुशक्तिः न कदाऽपि मानवकुलस्य विनाशकारिकार्यक्रमाय उपयोक्तव्या इति दृढनिर्धारः घण्टाघोषायितः । अन्ताराष्ट्रियस्तरे नेहरूमहोदयस्य अनुमोदनेन पुग्वाश् नामकात् केनडादेश-स्थितात् स्थानात् आन्दोलनम् एकं प्रारब्धं यस्य मुख्योद्देशः विश्वशान्तिस्थापनाय मानव-हितरक्षणाय एव विज्ञानस्य आन्तरिकशक्तेः उपयोगं प्रतिपादयितुं निर्दिष्टः वर्तते । विज्ञानशास्त्रम् आध्यात्मिकप्रवृत्त्या नैतिकतत्त्वैश्च साकं सन्तुलितं सदैव मानवहिताय प्रभवेत् इत्यात्मकं नेहरूमहोदयस्य मतं नूनं गमनार्हं प्रशंसनीयं च । १९५३ तमे वर्षे संप्रवृत्ते भारतीयविज्ञानशास्त्रसंसदि नेहरूमहोदयः आत्मनः जीवनस्य अन्तिमसन्देशमिव अर्थप्रगल्भिततत्वज्ञानम् एवम् आख्यापितवान्—"विज्ञानाद् ऋते कस्यापि समाजस्य उज्ज्वलं भविष्यमेव नास्ति । अन्यच्च सत्यपि विज्ञानशास्त्रप्रयोगे, उज्ज्वलं भविष्यं न भविता यदि विज्ञानं केनचित् आध्यात्मिकप्रणोदनेन न संनियतः स्यात् इति" । अहो नेहरूमहोदयस्य विचाराणां प्रौढिमा ।

**उपसंहारविमर्शः**

अन्ततः उपसंहाररूपेण नेहरूमहोदयस्य आर्थिकविकासविषयक-विचाराणां तेन प्रचोदितानां नीतीनां च सङ्ग्रहः क्रियते ।

नेहरूमहोदयस्य आर्थिकविकासनिदर्शनं समाजहितवादप्रधानमासीत्। परन्तु केन्द्रीकृताधिकारपद्धत्या समाजहितसाधनं नैव प्रतिपादितम्। व्यक्तिस्वाम्यं समाजहितसाधनं च नैव परस्परम् असङ्गते। योजनापद्धतिः, सार्वलौकिकरङ्गव्यक्तिस्वाम्यरङ्गयोः संमिश्रणं, राजकीयार्थिकाधिकाराणां विकेद्रीकरणं, जनसत्तात्मकराज्यपद्धत्यामेव आर्थिकविकासस्य समासादनम् इत्यादिनूतनतमनीतिप्रणाल्यः नेहरूमहोदयस्य मस्तिष्कादुद्भूतान् विचारानेव आश्रित्य निबद्धाः व्यवहारीकृताश्च।

नेहरूमहोदयस्य विकासनिदर्शने कृषिरङ्गस्य ग्रामीणरङ्गस्य च उपेक्षा कृता इति अद्यतनविमर्शकैः क्रियमाणं दोषारोपणं नैव साधु। आर्थिकविकासार्थं प्रेरणां नेहरूमहोदयः कृषिरङ्गस्य ग्रामीणजनतायाश्च हीनदशावलोकनेन एव प्राप्तवानिति अनेकप्रमाणप्रमितः विषयः। अन्यच्च कृषिरङ्गस्य अभिवृद्धये ग्रामीणजनतायाः हितसाधनाय च, सहकारसङ्घव्यवस्था, पञ्चायतराज्यव्यवस्था, कृषिभूमिस्वाम्यविषयक परिवर्तनं, ग्रामीणऋणसन्दानव्यवस्था, कृषिसंशोधनसंस्थानां स्थापनम् इत्यादयः कार्यक्रमाः नेहरूमहोदयस्य नेतृत्वे एव सम्पादिताः। आहारसामग्रीणाम् उत्पादने आत्मनिर्भरता देशे अप्लकाले एव सम्पादिता इत्येतत् नेहरूमहोदयस्य नीतीनां साफल्यं व्यञ्जयति।

नेहरूमहोदयः देशस्य आर्थिकविकासार्थं गुरुतरोद्योगानां विस्तारं मूलाधारत्वेन परिगणितवान्। अत एव द्वितीयपञ्चवार्षिकयोजनायाः आरभ्य गुरुतरयन्त्रोत्पादनरङ्गस्य प्राशस्त्यं दत्तमासीत्। एतादृशप्राशस्त्यनीत्या एव अद्य भारतदेशे अनेकयन्त्रवस्तूत्पादनसामर्थ्यं विशेषतया आसादितमित्येषः अभिमानविषयः। विज्ञानम् आधुनिकोत्पादनपरिभाषा इति उभौ भारतदेशस्य अभिवृद्धिसिद्ध्यर्थम् अत्यन्तमावश्यकोपायौ इति नेहरूमहोदयः दृढं विश्वसिति स्म। विज्ञानशास्त्रस्य अध्ययनसंशोधनादीनाम् उपचयप्राप्त्यै भारतीयविज्ञानसंस्थानां स्थापनं, विज्ञानरङ्गस्य विकासाय पर्याप्तधनादानस्य व्यवस्था, भारतदेशस्य वैज्ञानिकसम्पदः सम्पोषणं प्रचयश्च इत्यादयः सम्पादिताः नेहरूमहोदयेन। वैज्ञानिकचित्तप्रवृत्तिः प्रत्येकं भारतीयेन सम्पादयितव्या, तथा च विज्ञानम् आध्यात्मिकविचारधारया सन्तुलितमेव

मानवकुलस्य हितसाधकं भवेदित्यात्मकप्रमेयान् उद्घोष्य नेहरूमहोदयः भारतदे-शस्य आर्थिकविकासप्रपञ्चे आत्मनः विशिष्टं स्थानमेव सम्पादितवानिति अलं विस्तरेण ।

* * * *

तृतीयं प्रकरणम्

# दादाभाई नौरोजीमहाभागस्य विचाराः

भारतदेशस्य राजकीयसांस्कृतिकार्थिकरङ्गेषु नूतनविचारधाराणां प्रवर्तकेषु दादाभाई नौरोजीमहाभागस्य नाम अग्रेतनस्थानमलङ्करोति। दादाभाई नौरोजीमहाभागः १८२५ तमे वर्षे जन्म प्राप। द्वानवतिवत्सराणां पूर्णजीवनं जीवित्वा सः आत्मनः इहलोकयात्रां १९१७ तमे वर्षे समापितवान्।

दादाभाईनौरोजीमहाभागस्य कार्यपरिसरः देशे राष्ट्रियताभावस्य बीजारोपणसमये एव परां काष्ठां प्राप। भारतीयराष्ट्रियकाँग्रेससंस्थायाः स्थापनं कृतवताम् उदात्तध्येयानां भारतीयमहाजनानां मध्ये नौरोजीमहाभागोऽपि एकः अग्रगण्यः आसीत्। भारतीयराष्ट्रियकाँग्रेस् संस्था १८८५ तमे वर्षे प्रारब्धा किल। दादाभाईनौरोजीमहाभागः त्रिवारं, १८८६ तमे वर्षे, १८९३ तमे वर्षे, १९०६ तमे वर्षे च, राष्ट्रियकाँग्रेस् संस्थायाः अध्यक्षस्थानमलङ्कुर्वाणः अध्यक्षीयभाषणं प्रदत्तवान्। एषु अध्यक्षीयभाषणेषु नौरोजीमहाभागस्य विचारस्पष्टता, देशभक्तिः, संख्यागणनाचातुर्यम् इत्यादयः स्फुटीभवन्ति। स्वीयभाषणेषु सः भारतदेशस्य जनतायाः दारिद्र्यं, ब्रिटिश् शासकैः भारतदेशस्य सम्पदः शोषणं, शासकानां नीतिद्वैविध्यम् अनिष्पक्षपातता च इत्यादि विषयानधिकृत्य अधिकारवाण्याम् आत्मनः मतं प्रतिपादयति स्म।

**जनतायाः दारिद्र्यविषयकविमर्शः**

१८८६ तमे वर्षे सङ्गते काँग्रेस् अधिवेशने, भारतदेशस्य जनतायाः दारिद्र्यमधिकृत्य विशेषचर्चा सङ्गता। स्वीयाध्यक्षीयभाषणे नौरोजीमहोदयः एवं प्रतिपादयति—

"इयं संसद् भारतीयजनतायाः दारिद्र्यविषये आत्मनः अनुकम्पाम् उद्वेगं च प्रकटयति ।...यदा अहम् इतः पूर्वमेव देशस्य दारिद्र्यसमस्याम् अधिकृत्य अवोचं तदा देशस्य जनतायाः दारिद्र्यस्य मूलकारणं परराष्ट्रशासनस्य अतिमात्रव्ययप्रवृत्तिः इत्यपि प्रतिपादितवान् । तदानी अनेके जनाः मम प्रहासं कृतवन्तः । अधुना ब्रिटिश् सर्वकारस्य उच्चाधिकारिण एव इमं विषयमधिकृत्य स्पष्टतया कथयन्ति" इति ।

नौरोजीमहाभागः आत्मनः प्रतिपादनस्य पुष्ट्यै ब्रिटिश् तज्ज्ञानां ब्रिटिश् अधिकारिणां वा वाक्यानि संवादरूपेण अवतारयति स्म । परराष्ट्रशासनस्य अतिमात्रव्ययप्रवृत्तिविषये ब्रिटिश् सर्वकारस्य प्रधानसचिवस्य वाक्यानि एवम् उदाहरति—

"...आदायकरविषये सार्वलौकिकराजस्वस्य उत्पादनमूलविषये इंडियादेशस्य परिस्थितिः अत्यन्तम् असाधारणा विद्यते ।...न केवलम् इंडियादेशस्य जनानां विलक्षणाचाराः, परिवर्तनविषये प्रबला पराङ्मुखता इत्यादीनि अस्याः असाधारणतायाः कारणानि परन्तु परराष्ट्रनियमितशासनस्य सर्वकारस्य विलक्षणाः आयव्ययप्रवृत्तयः अपि कारणानि। परकीयसर्वकारः अतिमात्रम् अधिकारस्थानानि परराष्ट्रजनैरेव पूरयति येषां व्ययप्रवृत्तिः प्रायः अत्यधिका वर्तते । अयं विदेशीयसर्वकारः अवश्यकतया अधिकं सैन्यस्य धारणं करोतीत्यपि कारणेन व्ययाधिक्यं भवति । यदि नूतनकराकरणं परदेशीयशासननिमित्तं परदेशीयजनतायाः लाभाय इंडियादेशस्थजनेभ्यः निक्षिप्यते तर्हि एतादृशक्रमस्य राजकीयपरिणामः अत्यन्तम् अनर्थकारी भविष्यति इत्यत्र न कोऽपि संशयः" इति ।

दादाभाईनौरोजीमहाभागस्य मनोभिनिवेशः भारतदेशस्य जनतायाः दारिद्र्यमधिकृत्य अत्यन्तम् प्रगल्भः आसीत् । सः दृढतया प्रत्यपादयत् यत् ब्रिटिश्

शासकैः प्रारब्धाः अभिवृद्धिकार्यक्रमाः निष्फला इव मन्तव्याः यदि एतेषां परिणाम-स्वरूपं देशस्य अधिकतरजनतायाः दुर्गतत्वस्थितिः पुनरपि अधोगतिम् एव प्राप्नोति । सः कांग्रेस् संस्थायाः वार्षिकाधिवेशनेषु वारम् वारम् उद्घोषयति स्म यत् भारतदेशीयैः देशस्य अभिवृद्धिविषये, निर्धनतानिवारणविषये उच्चस्वरेण तथा उत्क्रोशः कार्यः येन ब्रिटिश् सर्वकारस्य अधिकारिणः अस्याः समस्यायाः प्रत्यभि-ज्ञानं कृत्वा आत्मनः कार्यक्रमेषु नीतिप्रत्ययेषु च यथायोग्यं परिवर्तनं कुर्युः इति । प्रायः एतादृशोद्बोध एव भारतीयस्वातन्त्र्यान्दोलनस्य, ब्रिटिश् सर्वकारस्य विरोधे असहकारान्दोलनस्य च बीजारोपणं देशभक्तानां हृदयक्षेत्रेषु अकरोत् इति कथयितुं शक्यते ।

१८८६ तमे वर्षे, १८९३ तमे वर्षे, १९०६ तमे वर्षे च सङ्गतेषु राष्ट्रियकाँग्रेस् अधिवेशनेषु दादाभाईनौरोजीमहाभागः आत्मनः अध्यक्षीयभाषणेषु निम्नलिखित-विषयानधिकृत्य उत्तेजनकारिविचारान् प्रत्यपादयत्—(१) भारतदेशस्य जनतायाः दारिद्र्यं (२) ब्रिटिश् जनतायाः भारतदेशस्य क्षेमवर्धने आस्था (३) भारतदेशस्य ब्रिटिश् देशेन साकं व्यापारः (४) भारतदेशस्य मुद्राव्यवस्था कराकरणनीतिश्च (५) सार्वजनिक सेवासमितिपरीक्षाणां भारतदेशे इंग्लेंडदेशे उभयत्रापि एककाले एव सङ्घटनम् (६) भारतीयानां ब्रिटिश् पौराधिकारः इत्यादयः ।

भारतदेशस्य दारिद्र्यविषये इतः पूर्वमेव चर्चा कृता वर्तते । भारतदेशस्य दारिद्र्यस्य मापनं दादाभाईनौरोजीमहाभागस्य उपक्रमेण सर्वेषाम् अवगाहनपथ-मायात् । १८८१ तमवर्षादर्वागेव दादाभाईनौरोजीमहाभागेन भारतदेशस्य दारिद्र-च्यविषयमधिकृत्य अनेकानि लेखनानि लिखितानि आसन् । तदनु भारतसर्वकारेण भारतीयानां परमावधिदारिद्र्यं विषयीकृत्य १८८२ तमे वर्षे तदनीन्तनेन आर्थिक-मन्त्रिणा लॉर्ड क्रोमर महोदयेन स्वीयभाषणावसरे महती चिन्ता प्रकटीकृता ।

नौरोजीमहाभागेन भारतीयजनतायाः वार्षिकसामान्यायः केवलं २० रूप्य-काणि इति संशोध्य निरूपितम् । लॉर्ड क्रोमरमहाभागस्य मापनरीत्या वार्षिकसा-मान्यायः २७ रूप्यकावधिम् अनतिक्रम्य वर्तते इति प्रतिपादितमासीत् । नौरोजीमहाभागः क्रोमरस्य मापनपद्धतिं तस्य मूलसंख्याश्च प्रकटीकर्तुं निर्बबन्ध ।

परन्तु क्रोमरमहाभागः तत्सर्वं प्रकटीकर्तुं निराचकार इति विषयं नौरोजीमहाभागः वारं वारम् उद्बोध्य ब्रिटिश् शासनस्य अन्तःशून्यतां कितवतां च उद्भावयति स्म । इतोऽपि परं तस्य प्रगल्भः वादः वार्षिकसामान्यायस्य भारतीयजनतायां बन्टनविधानमधिकृत्य आसीत् । सामान्यायः २७ रूप्यकाणि वा भवतु २० रूप्यकाणि वा । अयम् अत्यन्तं धनाढ्यानां आयं तथा च अतीव धनहीनानां देहधारणेऽपि असमर्थगतीनाम् असङ्ख्यजनानाम् आयं च समायुज्य सम्पादितं सामान्यं वर्तते । अतः भारतदेशस्य सामान्यजनतायाः आर्थिकपरिस्थितिं गोचरीकर्तुम् एतादृशसामान्यायमापनं नैव प्रयोजकम् इति सिद्धान्तीयप्रमेयं प्रतिपादयामास । एतादृशसामान्यायात् ब्रिटिश् पौराणां, वाटिकेश्वराणाम्, उत्पादनाधिपानाम्, खानिकस्वामिनां, अन्यधनाढ्यानां च आयं व्यवकलय्य, भारतवासिनाम् सामान्यजनानां आयमात्रमनुलक्ष्य मापनं क्रियते चेत् भारतदेशस्य आर्थिकस्थितेः हीनतायाः बोधः भवेत् इति नौरोजीमहोदयः दार्ढ्येन प्रत्यपादयत् । भारतदेशस्य दरिद्रतमजनानां कठिनपरिश्रमेण उत्पादितं वसु परदेशनिवासिभिः अपह्रियते इति प्रमेयं, तथा च वसुनः, आयस्य च बंटनविधानमपि वसूत्पादनेन साकमेव विमृष्टव्यमिति प्रमेयं च नौरोजीमहोदयस्य वादः प्रत्यस्थापयत् ।

भारतीयजनतायाः हीनस्थितिः ब्रिटिश् सर्वकारशासनस्य शतवर्षाणां समापनेऽपि नैव उन्नतिं नीता इत्ययं महद्दुःखकरो विषयः । परराष्ट्रशासनस्य एतादृशदुष्परिणामस्य प्रबोधनं शतवर्षाणां पूर्वमेव १७८७ तमे वर्षे, सर् जॉन् षोर् महोदयेन प्रदत्तमासीदिति नौरोजीमहाभागः वारं वारं स्मारयति स्म । षोर् महोदयः एवं प्रत्यपादयत्—"परराष्ट्रशासितराष्ट्रस्य औद्योगिकविकासे विशेषतया अधिगम्यमानेऽपि विकासप्रचोदितलाभापेक्षया दवीयस्थानस्थितशासकस्य आधिपत्येन उद्भूताः दुष्परिणामाः अतिरिच्यन्ते" इति । ब्रिटिश् शासनस्य शासन पद्धतिः अतिशयितव्ययस्य मूलकारणम् इत्यात्मकः वादः नौरोजीमहोदयस्य "शोषणसिद्धान्त"स्य बीजरूपायितः ।

**ब्रिटन् देशे प्रभावः**

नौरोजीमहोदयः इंग्लेंडदेशस्य सर्वकारे हौस् ऑफ् कॉमन्स इत्याख्ये (सामान्यजनसभायां) शासकप्रभागे सभासदरूपेण निर्वाचितो भूत्वा भारतदेशस्य हितपोषणार्थ बहुप्रकारकं परिश्रमं कृतवान् । इंग्लेंडदेशे फिन्सबरीनामव निर्वाचन-क्षेत्रात् राष्ट्रियविमोचनपक्षस्य अभ्यर्थी भूत्वा १८९२ तमे वर्षे ब्रिटिशपौरैरेव विविधविरोधानां संमुखेऽपि निर्वाचितः इत्ययं प्रशंसनीयः अभूतपूर्वो विषयः । अनेन प्रभावकारिस्थानेन नौरोजीमहोदयः भारतदेशस्य हितपोषणाय धैर्येण कार्याणि साधयामास । तस्य अस्खलितशैल्यां प्रदत्तैः प्रगल्भविचारपरिप्लुतैः भाषणैः इंग्लेंडदेशस्थानाम् अनेकानां स्वतन्त्रविवेचनप्रवृत्तीनां जनानां मनसि भार-तदेशस्य आर्थिकराजकीयसामाजिकस्थितिमनुलक्ष्य महत् कौतूहलं जनितं, वि-शिष्टा आस्था च समुद्भाविता । १९१२ वर्षस्य ऑगस्टमासे सामान्यजनसभायां सङ्गतं नौरोजीमहोदयस्य प्रथमं भाषणमेव ब्रिटन् देशस्य जनतायां महान्तं प्रभावम् अकरोत् । भारतदेशवासिनम् एकम् इंग्लेंडदेशे स्थितात् निर्वाचनक्षेत्रात् (मध्यम फिन्स् बरी नामकात्) निर्वाचयित्वा, इंग्लेंडदेशस्य (लोकसभायां) संसदि भाषितुं तस्य अवकाशः प्रदत्तः इत्येतत् ब्रिटिश् जनानां स्वातन्त्र्यप्रेम, उदारतागुणं च स्फुटी-करोति इति ब्रिटिश् जनतायाः, ब्रिटिश् शासनस्य च श्लाघनं कुर्वाण एव भारतदे-शस्य जनतायाः विविधानां समस्यानां सूक्ष्मतया उल्लेखनं कृतवान् । नौरोजीमहोदयस्य सततप्रयासेनैव १८९४ तमे वर्षे भारतदेशस्य परिस्थित्याः विचारणं कर्तुं संसदः उपसमितिः स्थापिता इत्येतत् गमनार्हम् । ब्रिटिश् देशवासिनां तज्ज्ञानां, शासनधुरीणानां च वचनान्येव आत्मनः मतस्य पुष्ट्यै उदाहरन् सर्वान् संसत्सदस्यान् विस्मापयामास । एषा संसदः उपसमितिः भारतदेशे ब्रिटिश् शास-कानाम् अतिशयितव्ययमधिकृत्य विचारणं कर्तुम् उद्घोषिता । अनेन ब्रिटिश् शासनस्य शोषकप्रवृत्तिः, भारतदेशवासिनां कठिनपरिश्रमे सत्यपि अनुभूयमानः विशेषदारिद्र्याधिगमः, ब्रिटिश् अधिकारिणां ब्रिटिश् सैन्यस्य वेतनादिनिमित्तं क्रियमाणः अतिशयितव्ययः इत्यादिविषयाः ब्रिटिश् जनतायाः भारतीयानां च अवगाहनार्थम् आविष्कृताः ।

नौरोजीमहोदयस्य निरन्तरप्रयासेन एव सार्वजनिकसेवासमितिपरिक्षाणां भारतदेशे इंग्लेंडदेशे च उभयत्रापि एककाले सङ्घटनम् अनुमोद्य निर्णयः ब्रिटिश् संसदि प्रस्तावितः स्वीकृतश्च । ब्रिटन् शासितेषु कनाडा, ऑस्ट्रेलिया, केप् आदि-देशेषु सार्वजनिकसेवासमितिपरीक्षाः तत्र तत्रैव प्रदेशेषु प्रचलन्ति, कथं वा भारतदेशे भारतदेशवासिभ्यः एतादृशसौकर्यं नैव प्रकल्पितम् इति भूयिष्टः तर्कबद्धः वादः नौरोजीमहोदयेन पुरतः कृतः । भारतदेशस्य शासनं भारतदेशीयानाम् एव आधिपत्ये स्थापितव्यं तथा च शासनविभागेषु भारतीयानाम् अधिकाधिकसङ्ख्यायाम् उप-स्थितिः भवितव्या इत्याद्याः दीर्घदर्शिविचाराः नौरोजीमहोदयम् एतादृशसौकर्यस्य निर्बन्धनार्थं प्रचोदयामासुः । भारतदेशे सङ्गते काँग्रेस् पक्षस्य वार्षिकाधिवेशने नौरोजीमहाभागः एककालिकपरिक्षासङ्घटनाविषयमधिकृत्य प्रस्तावमेकं प्रतिपाद-यामास । प्रस्तावः निम्नलिखितः वर्तते ।

"अस्य काँग्रेस्पक्षस्य अधिवेशनस्य दृढं मतमेतत् यत् सार्वजनिकसेवायां विविधविभागेषु प्रथमनियुक्तिं कर्तुम् अभ्यर्थिनां वरणार्थं संयोजिताः स्पर्धात्मक-परीक्षाः, याः अधुना केवलम् इंग्लेंडदेशे प्रचलन्ति, ताः इतः प्रभृति भारतदेशे इंग्लेंडदेशे च उभयत्रापि एककाले एव सञ्चलन्तु । १८६० तमे वर्षे घटितस्य इंडियाकार्यस्थानसमितेः अपि अयमेव अभिप्रायः आसीत् । उभे अपि परीक्षे यावच्छक्यं समानधर्मिके भवेताम् । ये अभ्यर्थिनः भारते वा इंग्लेंडदेशे वा परीक्षां प्रददति ते सर्वेऽपि अन्ततः एकस्यामेव नामावल्याम् आत्मनः गुणयोग्यतानुगुण्येन यथावर्गम् उल्लेखिताः भवेयुः । भारतदेशे परीक्षां गृहीत्वा ये अभ्यर्थिनः उत्तीर्णाः भवेयुः तान् सर्वान् उच्चतराभ्यासार्थम् इंग्लेंडदेशं प्रति सर्वकारः प्रेषयतु । तत्र च अवश्यं चेत् विशिष्टपरीक्षाः अपि गृह्यन्ताम् । अन्यानि अवरपदानि भारतदेशे एव नियोजितस्पर्धात्मकपरीक्षाणां परिणामम् अनुसृत्य पूरितानि भवेयुः । अन्ततः शास-नाधिकारिपदेषु, नियुक्त्यर्थम् अभ्यर्थिनाम् अधिकतमायुः २३ वर्षाणि भवतु" इति ।

दादाभाइ नौरोजीमहाभागः राजकीयसंसदः सदस्यो भूत्वा भारतदेशस्य शासनपद्धत्यां संस्करणं प्रवर्तयितुं महान्तं प्रयत्नमकरोत् । राजकीयसंसदः विवेच-नासमये नौरोजीमहोदयः आत्मानमपि साक्षीरूपेण प्रत्यक्षीचकार । सदस्यत्वेन

आत्मनः मतं प्रकटीकुर्वन्नपि समितेः आत्यन्तिकप्रबन्धे आत्मनः मतस्य उल्लेख एव न स्यात् इति भयेन स्वयं साक्षीस्थानं स्वीकृत्य अनेकानि नूतनानि सूचनानि प्रतिपादयामास । राजकीयसंसदः अध्यक्षस्य नौरोजीमहोदयेन सार्कं सङ्गतः प्रश्नोत्तररूपः संवादः ध्येयो विद्यते ।

अध्यक्षः नौरोजी महाभागं पृच्छति—

"किं वा भवान् वाञ्छति ? किं भवान् समग्राम् इंग्लिश् शासनव्यवस्थामेव अपमार्जितुम् इच्छति ?"

नौरोजीमहाभागः—"आम्, अद्यतनीयव्यवस्था परिवर्तनीया एव"

अध्यक्षः—"किं भवान् ब्रिटिश् शासनस्य नागरिकसेवापद्धत्यां यत्किञ्चिदपि अवशेषयितुम् इच्छति वा न वा ?"

नौरोजीमहाभागः—"केवलं राजप्रतिनिधिपदम्, अधिष्ठातृपदं सेनाधिपतिपदम् इत्यादीनि भारतदेशे आत्मनः स्वायत्तताधारणनिमित्तम् आवश्यकानि उच्चतमस्थानानि ब्रिटिश् जनेभ्यः आरक्षितानि भवेयुः ।"

अध्यक्षः—"उच्चतमस्थाने नियुक्तानां ब्रिटिश् जनानाम् अधीनतया न कोऽपि ब्रिटिश् जनः अस्तु इति भवतः अभिप्रायः किं ?"

नौरोजीमहोदयः—"आम्, अन्यस्थानेषु ब्रिटिश् जनानाम् आवश्यकता एव नास्ति । भारतदेशवासिनः एव सर्वाणि कार्याणि निर्वाहयितुं समर्थाः भवेयुः"

अध्यक्षः—"क्रमशः सर्वानपि ब्रिटिश् अधिकारिणः निष्कासितुं भवान् अभिप्रैति किं ?"

नौरोजीमहोदयः—"आम्, अवरतमस्थानेभ्यः आरभ्य उच्चाधिकारिपदपर्यन्तं ब्रिटिश् जनानां निष्कासनं, तेष्वेव स्थानेषु भारतदेशवासिनां नियुक्तिः इत्यात्मकः परिवर्तनरूपी कार्यक्रमः क्रमशः व्यवहारपथमायातु"इति ।

आभिः स्पष्टोक्तिभिः, प्रगल्भेन वादेन च नौरोजीमहाभागस्य दूरदर्शिता, धैर्यं, देशसेवानिष्ठता इत्यादयः गुणाः स्फुटीभवन्ति । अनेन वादेन ब्रिटिश्

अध्यक्षोऽपि अत्यन्तं प्रभावितः अभूत्। ब्रिटिश् जनतायां भारतदेशवासिनां महाकाङ्क्षाणां प्रत्ययः अभवत्। अनेन भारतीयानां स्वाधिकारसमर्थनपरवादेन अचिरादेव प्रवर्त्स्यमानस्य स्वातन्त्र्यान्दोलनस्य शिलान्यासः इव प्रस्थापितः। १९०४ तमे वर्षे नौरोजीमहोदय एव लंडन्इंडियन्सङ्घे भाषमाणः एवम् उद्घोषयामास—"भारतदेशे अधुना प्रवर्तितम् अमाननीयं, कापटिकं तथा च विनाशकारि शासनम् अवश्यं निष्कासनीयम्। तत्स्थाने भारतवासिभ्यः स्वायत्तप्रशासनाधिकारः अचिरादेव प्रदातव्यः" इति।

नौरोजीमहाभागः क्रमशः समाजहितवाददर्शनस्य अनुयायी बभूव इत्येतत् तस्य १९०४ तमवर्षादूर्ध्वं कृतेषु भाषणेषु स्फुटीभवति। तस्य महती अनुकम्पा कर्मकाराणां जीवनविधानस्य परिवर्तनविषये आसीत्। "कर्मकाराणां अधिकाराः" इत्याख्यं कार्यक्रमं निरूपयन् सः श्रमिकतां सर्वोच्चवसुत्वेन परिगणयितुं निर्बन्धं चकार। नौरोजीमहाभागः अन्ताराष्ट्रियसमाजवादगोष्ठ्याम् एकस्यां संमाननीयातिथिरूपेण भारतदेशवासिनां प्रतिनिधित्वेन च आमन्त्रितः सन् तत्रागतैः श्रमिकजनैः समागमाध्यक्षादिपदाधिकारिभिश्च सोत्साहं हार्दिकभावैः प्रशंसावचनैश्च प्रगल्भं सभाजितः। तत्रैव सभायां ब्रिटिश् श्रमिकनेत्रा एकेन भारतदेशे प्रचलितस्य ब्रिटिश् शासनस्य अवहेलनाप्रतिपादकः, ब्रिटिश् स्वाम्यस्यैव निष्कासनोद्बोधकः निर्णयः प्रस्तावितः। एतत् सर्वं नौरोजीमहाभागस्य ब्रिटिश् जनतायां सम्पादितं प्रभावं द्योतयति।

**शोषणसिद्धान्तः**

भारतदेशस्य ब्रिटिश् देशेन साकं प्रवृत्तम् आयातनिर्यातव्यापारमधिकृत्य प्रकटिताः नौरोजीमहाभागस्य विचाराः अवश्यं गमनार्हाः विद्यन्ते। निर्यातेन प्राप्तं धनम् आयातनिमित्तव्ययार्थम् उपयुज्यते किल। निर्यातेन प्राप्तः आयः ब्रिटिश् सर्वकारस्य स्वाम्ये स्थितः भारतदेशस्य जनानां हितसंवर्धनाय नैव उपलब्धः भवति इति नौरोजीमहोदयस्य दृढः वादः। भारतदेशे निर्यातप्राप्तधनात् न्यूनतरं धनम् आयातनिमित्तम् उपयुज्यते। अतः भारतदेशस्य आयस्य ब्रिटिश् सर्वकारेण शोषणं भवति इति नौरोजीमहाभागस्य सैद्धान्तिकवादः। १८८३ तमवर्षादारभ्य १८९२

तमवर्षपर्यन्तं प्रचलितानाम् आयातनिर्यातानां सांख्यिकविमर्शनं कृत्वा ब्रिटिश् स्वायत्तीभूतेषु अन्यदेशेषु आयातधनं निर्यातधनात् बह्वंशेन अतिरिच्यते इति तेन प्रदर्शितम् । युनाइटेड् किंग्डम् देशे एव आयातधनं निर्यातधनात् प्रतिशतं ३२ संख्यया अतिरिच्यते । नॉर्वेदेशे ४२ संख्यया, स्वीडन्देशे २४ संख्यया, डेन्मार्कदेशे ४० संख्यया, हॉलंड्देशे प्रतिशतं २२ संख्यया च आयातधनं निर्यातधनात् अतिरिच्यते ।

यदि निर्यातेन सम्पादितं धनम् आयातावश्यकधनात् अतिरिच्य वर्तते तर्हि आयातनिर्यातान्तरधनं देशस्य अभिवृद्धिसाधनार्थं देशस्य सर्वकारस्य स्वाम्ये स्थापितव्यम् । परन्तु यदि देशः कस्यचित् परराष्ट्रस्य स्वाम्ये उपनिवेशनत्वेन वर्तते तर्हि निर्यातोद्वर्तं धनं परराष्ट्रस्य स्वाम्ये भवत् देशस्य अभिवृद्ध्यर्थं नैवोपलभ्येत । भारतदेशस्य परिस्थितिः अपि एवमेव आसीत् । नौरोजीमहाभागस्य शोषणसिद्धान्तस्य युक्तिवादः इममेव तर्कम् अवलम्ब्य निबद्धः वर्तते । यदि शोषितः देशः, तत्रत्यनेतारश्च परराष्ट्रस्य स्वाम्यं, विरोधं विना, स्वीकुर्वन्ति तर्हि स्वामिराष्ट्रेण शोषणम् अधिकमेव भवेत् । भारतराष्ट्रस्य श्रमिकैः उत्पादितस्य आयस्य अधिकः भागः भारतवासिनां हितवर्धनाय उपलब्धः न भूत्वा ब्रिटन् वासिनाम् उपभोगाभिवृद्धये उपयुक्तः भवतीत्येव शोषणसिद्धान्तस्य तात्पर्यम् ।

नौरोजीमहोदयः प्रत्यपादयत् यत् भारतीयादायात् निम्नलिखितविषयासम्बद्धाः आयाः देशाद् बहिः ब्रिटिश् जनानाम् अधिकोपभोगनिमित्तम् उपयुज्यन्ते—(१) युरोपदेशीयैः पदाधिकारिभिः इंग्लेंडस्थितेभ्यः आत्मनः बान्धवेभ्यः पोषणविद्यार्जनादिनिमित्तं प्रेषितं धनम्, (२) परराष्ट्रीयैः आत्मनः कार्यनिवृत्तिसमये ततः पूर्वं वा भारतदेशाद् बहिः प्रेष्यमाणम् आत्मनः जीवनवृत्तेः सञ्चितं धनम्, (३) पराष्ट्रियैः आत्मनः उपभोगार्थं ब्रिटन् देशे उत्पादितवस्तूनां क्रयणार्थं प्रेषितं धनम्, (४) भारतदेशे स्थितैः परराष्ट्रीयाधिकारिभिः भारतदेशे स्थित्वा एव ब्रिटन् देशे निर्मितवस्तूनां क्रयणार्थं व्ययीकृतं धनम्, (५) सर्वकारस्य वस्तुकोषाधिकारिभिः भारतदेशे उपयोगार्थं ब्रिटिश् वस्तूनां क्रयाणार्थं व्ययीकृतं धनम् ।

नौरोजीमहाभाग: भारतदेशात् शोषितधनस्य मापनमपि बहुश्रमेण अनेकमूलै: सङ्ख्यासंग्रहं कृत्वा रचितवान् इत्येतत् तस्य अर्थशास्त्रसंख्याशास्त्रयो: परां परिणतिं सूचयति । तस्य मापनानुसारेण १८१४ वर्षादारभ्य १८६५ वर्षपर्यन्तं पञ्चाशद् वर्षेषु, १५०० दशलक्ष पौंडसंख्याकमौल्यस्य भारतीयवसो: शोषणं अभवत् इति ज्ञायते । एतादृशं प्रभूतं वसु भारतदेशवासिनाम् आर्थिकविकासनिमित्तं स्वाम्ये नैव अवशिष्टं परन्तु ब्रिटिश् शासननिमित्तं भारतदेशाद् बहि: निष्कासितम् इत्ययम् अत्यन्तं शोचनीयो विषय: । एतावत् वसु ब्रिटिश् सर्वकाराय भारतदेशीयै: प्रदत्त: उपहार: इव अभूत् । एतादृशेन प्रभूतवसुन: हस्तान्तरीकरणेन ब्रिटिश् शासनस्य अतीवशोषकत्वरूपपरिणाम: स्फुटीभवति इति नौरोजीमहाभागस्य वाद: आसीत् ।

यदि आयातनिर्यातयो: परिणामेन भारतदेशे एव आदायस्य, जीविकावृत्तीनां च अभिवृद्धि: तावती न भवति, यावती एतादृशायातनिर्याताभ्यां प्रचोदिता आदायस्य जीविकावृत्तीनां च अभिवृद्धि: इंग्लैंडदेशे भवति, तर्हि "आदायजीविका वृत्तीनां परराष्ट्रे परिस्रवणं" भवति इति मन्तव्यम् । इंग्लैंडदेशस्य गौरजननिवेशनेषु कॉनडा, ऑस्ट्रेलिया, स्वीडन् आदिषु निर्यातापेक्षया आयाताधिक्यस्य सत्त्वम् एतत् सूचयति यत् एतेषु देशेषु आदायजीविकावृत्तीनां परराष्ट्रे परिस्रवणं नैव भवति प्रत्युत एतानि गौरजननिवेशनानि इंग्लैंडदेशेन साकं व्यापारसम्बन्धेन विशेषं लाभमेव प्राप्नुवन्ति इति ।

भारतदेशे शकटयानानुकूल्यविकासाय इतरसार्वजनिकसुविधाविकासाय च इंग्लैंडदेशेन ऋणधनं प्रदत्तमिति नौरोजीमहोदय: अङ्गीचकार । परन्तु एतादृशऋणधनस्य अधिकतर: लाभ: गौरजनेभ्य एव जीविकानियुक्तिरूपोपायै: समभूत्, तथा च भारतवासिभ्य: लाभस्य बह्वल्प: भाग: समासीदत् इति स: प्रत्यपादयत् । ऋणधनेन भारतदेशस्य ऋणसन्दानभार: मूलधनचक्रवृद्धिसन्दानरूप: प्रावर्धत इत्यपि गमनार्ह: विषय: इति स: प्रत्यपादयत् ।

नौरोजीमहोदयस्य आर्थिकविश्लेषणपद्धति: अत्यन्तम् विद्वत्पूर्णा प्रगल्भा च आसीत् । तस्य विश्लेषणे अधुनातना: अनेके अर्थशास्त्रसिद्धान्ता: अपि निगूहिता

इव आसन् । भारतदेशस्य मुद्रायाः मौल्यस्य विघटनेन ऋणधनसन्दानभारः अभ्यवर्धत इति सः प्रत्यपादयत् । निर्यातवस्तूनां मौल्यस्य वृद्धिः आयातवस्तूनां मौल्यस्य वृद्धेः अल्पतरा भवति चेत् निर्यातकर्तुः देशस्य आर्थिकहानिः भवति इत्यात्मकम् अद्यतनीयं प्रमेयमपि नौरोजीमहोदयः आत्मनः संशोधनविश्लेषणे अभिनिवेशितवान् आसीत् । अयमेव सिद्धान्तः 'व्यापारसापेक्षमौल्यस्य विघटनसिद्धान्तः' इति अधुना प्रथितः वर्तते । अर्जेंटिना देशस्य राँल् प्रेबिश् नामक स्यसुप्रसिद्धार्थशास्त्रज्ञस्य तथा मूलतः इंग्लैंडदेशीयस्य सिंगर् नामकार्थशास्त्रज्ञस्य च नामाभ्यां प्रेबिश्-सिंगर् प्रमेयाख्यया प्रथितस्य प्रमेयस्य मूलतः प्रतिपादनं नौरोजीमहाभागेन एतयोः पूर्वमेव कृतमिति अङ्गीकर्तव्यम् ।

## रूप्यकस्य सुवर्णनियतत्वविचारः

नौरोजीमहाभागः भारतीयमुद्रायाः सुवर्णनियतत्वं भवितव्यम् उत रौप्यनियतवं प्रवर्तितव्यम् इति विषये आत्मनः स्पष्टविचारान् प्रत्यपादयत् । सः सुवर्णनियतत्वविकल्पस्य विषये आत्मनः विरोधम् उदघोषयत् । भारतीयमुद्रायाः मौल्यस्य सुवर्णमौल्यनियतत्वे सति सुवर्णस्य अर्थनम् अत्यन्तं अभिवर्धेत येन सुवर्णस्य मौल्यंरौप्यास्केषु अधिकं स्यात् । अनेन भारतदेशस्य असंख्यकृषकाणाम् उपरि करभारः अपि वृद्धिम् अधिगच्छेत् यतः निर्धारितसुवर्णक्रयणाय अधिकतरप्रमाणस्य रौप्यस्य अवश्यकता भवेदिति सर्वकारः कृषकाणाम् उपरि अधिकतरकराकरणं विधाय रौप्यनिर्मितमुद्राणां संचयनं कर्तुं प्रवर्तेत । तदानीं प्रवर्तिता हेर्सेल् कमीटी इत्याख्या कार्यसम्पादिका सभा अपि नौरोजीमहाभागस्य इदं विश्लेषणम् अनुमोदयामास इति गमनार्हो विषयः । भारतदेशे रौप्यमूलमुद्राणाम् उपलब्धिप्रमाणं यदि सर्वकारेण नियतं सत् विघट्यते तर्हि भारतदेशस्य आन्तरिकव्यापारस्य विघटनं भवेत्, मौल्यस्य अभिवृद्धिः श्यात् तथा च अकिंचनानां करप्रदातृणाम् असंख्यभारतीयानाम् उपरि आर्थिकभारः अधिकतरः भवेदिति नौरोजीमहोभागस्य तर्कबद्धः वादः नितरां साधुः आसीदिति अवगन्तव्यम् ।

**आन्तरिकशोषणम्**

दादाभाईनौरोजीमहाभागस्य शोषणसिद्धान्तः बाह्यशोषणम् आंतरिकशोषणं इति द्विविधम् शोषणपरिणामं निरूपयति । बाह्यशोषणरूपपरिणामेन भारतीयजनतायाः क्रयणशक्तिः विघटिता सती परराष्ट्रस्थितजनतायाः क्रयणशक्तेः वृद्धिं सम्भावयति । आयातापेक्षया निर्यातस्य अतिरिक्तत्वं व्यवसायाप्रचोदकनिर्यातरूपेण परिणम्य क्रयणशक्तेः भारतदेशात् बहिर्निष्कासनं सम्पादयति इति अवगन्तव्यम् । आन्तरिकशोषणप्रक्रमोऽपि ईदृशः वर्तते । सर्वकारस्य अधिकतरकराकरणनीतिः भारतदेशस्य ग्रामीणरङ्गे कृषिकर्मादिव्यवसायेषु रतानाम् असंख्यानाम् अल्पादायजनानाम् अधुनैव अल्पीभूतां क्रयणशक्तिं इतोऽपि अल्पतरां विधाय पौररङ्गे यन्त्रक्रमोद्योगव्यापारादिप्रचीयमानासङ्ख्यव्यवहारेषु प्रवृत्तानाम् अधुनैव प्रभूतादायानां— अधिकतया इंग्लैंडदेशीयानाम्, अधिकारपदेषु नियुक्तानां च जनानां क्रयणशक्तिम् इतोऽप्यधिकं प्रचाययति इति आन्तरिकशोषणस्य प्रकारः । यदि कराग्रहीतधनम् अधिकसंख्याकस्य जनसामान्यस्य हितसंवर्धनाय अनेकविधसार्वजनिकसेवाव्यवसायेषु प्रयुज्यते येन भारतीयजनतायाः जीविकावृत्तीनां प्रसङ्गाः विकासं गच्छेयुः, तर्हि ग्रामीणरङ्गात् शोषितं वसु देशे एव विस्तारतया विभजितं तिष्ठति इति प्रकल्पयितुं शक्यते । परन्तु नौरोजीमहाभागस्य विश्लेषणरीत्या बाह्यशोषणस्य परिमाणम् आन्तरिकशोषणस्य परिमाणेन साकं नितरां सम्बद्धं वर्तते । व्यवसायानर्हनिर्यातानां वृद्धिः तदैव भवितुं शक्यते यदा आन्तरिकशोषणप्रकारेण ग्रामीणरङ्गस्य क्रयणशक्तिः पौररंगस्थितान् जनान् प्रति स्थानान्तरिता सती देशादपि बहिः निःसरति ।

बाह्यशोषणं व्यवसायानर्हनिर्यातरूपेण एव व्यवहारे प्रचलति इति पूर्वमेव प्रतिपादितम् । बाह्यशेषणम् आन्तरिकशोषणम् इति उभेऽपि ब्रिटिश् शासनस्य अतिशयितव्ययप्रवृत्तेः परिणामस्वरूपे इति दृढं निरूप्य भारतदेशस्य स्वातंत्र्यस्य अत्यावश्यकतां नौरोजीमहोदयः प्रतिष्ठापयास । नौरोजीमहाभागस्य विचाराणां प्रभावः तदानीन्तनानां ब्रिटिश् देशीयार्थशास्त्रज्ञानां, लेखकानां च मनसि प्रगल्भः आसीदिति स्फुटीभवति । टर्नर नामकः लेखकः आत्मनः ग्रन्थे “ब्रिटिश् शासनस्य

मादकद्रव्यनीतिः भारतचीनदेशयोः तत्परिणामश्च" इत्याख्ये एवं लिखति—"ब्रिटिश् शासनस्य अनुभवः सर्वेभ्यः इमं सन्देशं शिक्षयति यत् अतिशयितव्ययशीलस्य ब्रिटिश् शासनस्य द्विशतदशलक्षसंख्याकात् जनसमुदायात् कराकरणं कृत्वा क्रियते इत्येतत् अन्याय्यमिति । भारतदेशीयाः बहुसंख्याकाः जनाः जीवनधारणार्थमपि अशक्ये दारिद्र्ये परितपन्तः वर्तन्ते । एतादृशानां जनानां नित्योपयोगिनां जीवनार्थं अत्यावश्यकानां लवणं इत्यादि वस्तूनाम् उपरि अपि प्रतिशतं ६०० परिमाणेन कराकरणं कृत्वैव ब्रिटिश् शासनं प्रवर्तयितुं शक्यते इति ब्रिटिश् अधिकारिणां मतम् इति अवगम्यते । एवं सति कथं वा ब्रिटिश् शासनं भारतदेशस्य हिताय वरदानमिव परिगण्येत ? " इति ।

भारतीयस्वातन्त्र्यसङ्ग्रामे पुरतो गत्वा महात्मागांधी महाभागस्य नेतृत्वे सम्पत्स्यमानस्य लवणकरान्दोलनस्य बीजारोपणं नौरोजीमहाभागस्य विचारधाराप्रभावेन १८७१ तमे एव वर्षे समभूदिति उद्घोषितुं शक्यते ।

दादाभाईमहाभागस्य "शोषणसिद्धान्तः", भारतदेशस्य आर्थिकस्थितिः कुतः नीचत्वमापन्ना इति प्रश्नस्य प्रतिभापूर्णविश्लेषणं विरचयति । बाह्यशोषणप्रमेयः अन्ताराष्ट्रियसम्बन्धस्य प्रकारं शोधयति । आन्तरिकशोषणप्रमेयस्तु देशस्य अन्तः एव भिन्नभिन्नसमाजवर्गीयशोषणं भिन्नभिन्नप्रदेशीयशोषणं प्रभासयति । ग्रामीणरङ्गस्य आदायः पौररंगं प्रति, अल्पादायवर्गात् अधिकादायवर्गं प्रति, अविकसितप्रदेशस्य आदायः अतिविकसितप्रदेशं प्रति, स्थानान्तरितः देशे आदायविभजनस्य अन्याय्यताम् अतिशयितां करोतीति दादाभाईनौरोजीमहाभागस्य वादः अद्यतनीयस्य न्याय्यविभजनसहितविकासरूपस्य विकासप्रमेयस्य भित्तिमूलम् इव आसीत् ।

## उपसंहारः

भारतदेशस्य आर्थिकराजकीयसामाजिकविकासविषयेषु दादाभाईमहाभागस्य विचाराणां प्रभावः अतिप्रगल्भः आसीदित्यत्र न कोऽपि संशयः वर्तते । इंग्लैंडदेशे एव स्थित्वा तत्रत्यजनैः एव प्रतिनिधित्वेन निर्वाचितः सन्, ब्रिटिश्,

देशस्य महासभायां सदस्यः भूत्वा, भारतदेशस्य हितसंवर्धनाय निरन्तरं प्रयासम-करोदित्येतत् नूनं नौरोजीमहाभागस्य महत्तमं जीवनसाफल्यं प्रद्योतयति । तस्य विविधप्रयत्नानां फलरूपमेव ब्रिटन् देशे भारतदेशस्य असंख्यजनानां दारिद्र्यस्य, आर्थिकावनतेश्च अङ्गीकरणं, ब्रिटिश् शासनस्य अतिशयितव्ययशीलत्वस्य वादः, भारतीयवसुनः बाह्यशोषणस्य आन्तरिकशोषणस्य च अभिव्यक्तिः, भारतदे-शस्य प्रशासनं भारतदेशवासिनां स्वाम्ये एव भवितव्यम् इति वादः, इतोऽप्यधिक-तया भारतीयस्वातन्त्र्यसङ्ग्रामाय भारतीयजनतायाम् आत्मविश्वासोत्साहादि-गुणानां प्रतिष्ठापनम् इत्यादयः साधुपरिणामाः फलिताः इत्यलं विस्तरेण ।

* * * *

## चतुर्थं प्रकरणम्

# महात्मागांधीमहाभागस्य आर्थिकविचाराः

महात्मागांधीमहाभागस्य नाम भारतीयस्वातन्त्र्यान्दोलनस्य इतिहासे अजरामरायितं वर्तते । अनेके तं राष्ट्रपिता इत्यपि सम्बोधयन्ति । देशस्य जनतायाः दारिद्र्यं, देशस्य पराधीनतां, ब्रिटिश् सर्वकारस्य निर्घृणप्रवृत्तिम् असंख्यभारतवासिनां निस्सहायताम् आत्मगौरवहानिं च प्रपश्यताम्, अत एव अत्युद्विग्नमनसां देशप्रेमिणां मध्ये गांधीमहोदयः अग्रेसरपदमदधात् । स्वातन्त्र्यान्दोलने गाधीमहोदयः अहिंसाप्रवृत्तिप्रगल्भं सत्याग्रहरूपं नवीनम् उपायं सम्बोधयित्वा जनतायां स्वातन्त्र्योद्देश्यं सर्वत्यागमपि कर्तुम् अभूतपूर्वमुत्साहं जनयामास । पंडितजवाहरलालनेहरूमहोदयः सरदारपटेलमहाभागः, लालबहादुरशास्त्रिमहोदयः इत्यादयः स्वातन्त्र्यान्दोलने नेतृत्वपदवर्तिनं गांधीमहोदयम् आत्मनः गुरुत्वेन अङ्गीकृतवन्त इव । दृढनिश्चयस्वभाववान्, प्रारब्धस्य अन्तगामी, सत्यमार्गानुसरणे निर्भीतः, आत्मनः सौख्यस्वास्थ्यादेः सर्वथा परित्यागकरणे कटुधीरः गांधीमहोदयः भारतदेशस्य अर्वाचीनेतिहासे नूतनक्रान्तिकारी इति प्रख्यातिं लेभे ।

गांधीमहोदयस्य विचाराः भारतदेशस्य जनजीवनस्य विविधरङ्गेषु प्रगल्भं प्रभावं व्यरीरचयन् । तस्य आर्थिकरङ्गसम्बद्धाः विचाराः वैशिष्ट्यपूर्णाः अनन्यसाधारणाः आसन्निति निमित्तेन तस्य अर्थशास्त्रबोधः गांधीयार्थशास्त्रम् (गांधियन् एकोनाँमिक्स) इति अभिख्यातं वर्तते । गांधीयार्थशास्त्रस्य स्वरूपं किमासीत् ? तस्य विशिष्टबोधाः के के आसन् ? गांधीयार्थशास्त्रं तदानीन्तनविचारधारायां कियत्प्रभावकारि आसीत् ? स्वातन्त्र्यपूर्वकाले तस्य परिणामाः के के आसन् ? स्वा-

तन्त्र्योत्तरकाले भारतदेशस्य आर्थिकाभिवृद्धिमार्गचयनकाले गांधीयार्थशास्त्रविचाराणां भूमिका उपयुक्तत्वेन स्वीकृता उत न ? अधुना आर्थिकनीतीनां विविधविकल्पैः अत्यन्तं सन्दिग्धावगतिसमये गांधीयार्थशास्त्रं किं प्रसङ्गोचितमिति गौरवेण परिगण्यते ? इत्यादयः प्रश्नाः उद्भवन्ति ।

गांधीमहोदयः स्वयं शिक्षणविधानरीत्या अर्थशास्त्रज्ञः नैव आसीत् । तथाऽपि तस्य अर्थशास्त्रसंबद्धविचाराः पाश्चात्यप्रणाल्याम् अधीतविद्यैः अर्थशास्त्रज्ञैः प्रतिपादितानां प्रमेयानां मूलतत्त्वानां च प्रसङ्गोचितताम् एव आशङ्कयन्ति इत्यवधारणं गमनार्ह वर्तते ।

गांधीमहाभागस्य अर्थशास्त्रस्य एकं प्रधानं वैशिष्ट्यम् एवं वर्तते यत् तस्य अर्थशास्त्रप्रमेयाः मानवीयमौल्यमूलम् आधारीकृत्य प्रसरन्ति । तस्य आर्थिकनीतिबोधाः किञ्चन पूर्वभावितम् आर्थिकविचारनिदर्शनं नैव अवलम्बन्ते । परन्तु एते जनस्य नीतिकाराणां च समाजं प्रति, राजकीयपरिसरमधिकृत्य च प्रवर्त्यमानां मनोव्यवहारप्रवृत्तिं संशोधयितुं, न्यायानुसारमार्गे लोककल्याणसाधनोद्देश्यं प्रेरयितुं च उद्युक्ताः विचारधाराः एव । गांधीयार्थशास्त्रे न किंचित् निश्चितं सूत्रं, न काचित् पूर्वनिर्धारिता विधिः व्यवस्था वा । बहुजनकल्याणप्रयोजनबद्धां व्यवहारनैतिकताम् उपष्टम्भयन् आर्थिकव्यवहारविमर्शः एव गांधीयार्थशास्त्रस्य स्वरूपमिति विद्वद्भिः परामृष्टम् ।

गांधीमहाभागस्य मतानुसारेण नैतिकता, आर्थिकव्यवहारसमस्याश्च परस्परम् अवियोज्यसम्बन्धेन बद्धाः । यथार्थम् अर्थशास्त्रं न कदापि अत्युच्चस्तरनैतिकमौल्यं प्रतिबाधयति । तथैव प्रगल्भनीतिशास्त्रबद्धपरामर्शः अवश्यं यथार्थं समीचीनम् अर्थशास्त्रमेव भासयेत् । नीतिशास्त्रबोधस्तु धर्मशास्त्रस्य सारभूतायितः । अतः अर्थशास्त्रं नीतिशास्त्रं धर्मशास्त्रं च इति सर्वाणि अपि शास्त्राणि परस्परपूरकतया सम्बद्धान्येव इति गांधीमहोदयस्य दृढप्रत्ययः आसीत् ।

सः अलिखत्—"यदि धर्मशास्त्रम् आर्थिकलाभप्रवृत्त्यां समन्वितं न स्यात् तर्हि किं वा धर्मशास्त्रबोध एव अतथ्यः भावयितव्यः अथवा आर्थिकलाभोद्देशकप्रवृत्तिः केवलं मर्यादातीतस्वार्थसाधनपरा सती समाजस्य समाहृतकल्याणसाधनाय

नैव परिकल्पते इति।" यदि अर्थशास्त्रविश्लेषणं न्याय्यान्याय्यविवेचनपूर्वकम् आत्मनि नीतिशास्त्रप्रकल्पितनिरूपणं न अन्तर्भावयति तर्हि तादृशार्थशास्त्रमेव यथार्थं परिज्ञातुं, सूक्तार्थिकनीतिबोधाय वा नैव प्रसङ्गोचितं स्यात्। गांधीमहोदयेन स्पष्टं लिखितं यत् अर्थशास्त्रज्ञाः केवलं सञ्चितविभवेनैकेन जनाः सुखं प्राप्तुं प्रभवन्ति इति अनुचितं भावयन्ति। जनानां स्वभावं, कार्यनिर्वाहविषयकप्रवृत्तिं, भावनापरतां, दक्षतां समाजप्रतिपत्तिं वा अपरिगणय्य केवलं विभवेन समाजकल्याणस्य शोधनं वृथाप्रयासः इति गांधीमहोदयः दृढं प्रत्यपादयत्। एवं सः नूतनम् एव अर्थशास्त्रं संशोधितव्यमितिमिति चिन्तकान् आकारयामास।

गांधीमहोदयस्य विशेषेण उल्लेखनीयाः आर्थिकविचाराः निम्नलिखितविषयानधिकृत्य विद्यन्ते—(१) जनतायाः उपभोगव्ययप्रवृत्तेः तथा च ईषणानां संयमः, (२) उपभोगवस्तुचयनविषये "स्वदेशी" भावनायाः उत्तेजनम्। (३) औद्योगीकरणम्, उद्योगपरिभाषा, (४) देशस्य विभवस्य निक्षेपव्यवस्था (५) कार्यतत्परता, कार्यनिवृत्तिः, अन्नाय (पिष्टकार्थ) श्रमः (६) इतराशोषणं, समानता च। एतेषां संक्षेपतः विवेचनं क्रमशः क्रियते अधोनिर्दिष्टवाक्यखण्डेषु।

**ईषणानां संयमः**

ईषणासंयमसिद्धान्तः गांधीयार्थशास्त्रस्य प्रधानाङ्गम्। लोककल्याणार्थशास्त्रस्य विमर्शने ईषणासंयमप्रमेयः सुतराम् अपूर्वः प्रगल्भपरिणामभूयिष्ठः प्रतिव्यक्तिकल्याणसाधकः उपायः इत्यवगन्तव्यम्। पाश्चात्यार्थशास्त्रम् एवं प्रतिपादयति यथा—व्यक्तिकल्याणस्य उत्कृष्टावधिप्रापणाय ईषणावैविध्यस्य प्रचोदनं, तस्य च बहुविधोपभोगवस्तुभिः समाधानम्, उपभोगवस्तूनां च आदायपरिमितिं यावत् क्रयणम् इत्यादिक्रमाः व्यवहारीकर्तव्याः। व्यक्तेः कल्याणस्य वर्धनार्थं तस्य ईषणानाम् अनवरतं विस्तारः कल्पितव्यः। यथा यथा ईषणानां बहुविधस्वरूपाः स्फुटीभवन्ति तथा तथा तत्तदीषणासमाधानकारकानाम् उपभोगवस्तूनां कल्पनं, तेषाम् उत्पादनं, तेषां क्रयविक्रयादिकम् इत्यादिकार्यक्रमैः देशस्य आर्थिकाभिवृद्धिरपि साध्यते। अतः देशस्य प्रत्येकं व्यक्तेः प्रवृत्तिः ईषणाविस्तारोद्देशं साधयतु। एतादृशव्यक्तीनां समुदाय एव समाजः भवति। व्यक्तीनां प्रवृत्तयः समाजस्य संस्कृतिं

व्यञ्जयन्ति । पाश्चात्यसंस्कृतिः ईषणाविस्तारोद्देश आर्थिकव्यवहारेषु केन्द्रस्थाने संस्थाप्य भौतिकवस्तुविकासमेव आर्थिकविकासः इति प्रतिपादयन्ति ।

पाश्चात्यसंस्कृतेः स्वरूपं गांधीमहोदयः एवम् आवेदयति—

"यदि त्वम् अधुना एककक्षाविशिष्टगृहस्य स्वामी असि तर्हि त्वया कक्षाद्वयविशिष्टगृहस्य प्राप्त्यर्थं तीव्रेषणा कार्या । तादृशगृहस्य स्वामित्वसाधनानन्तरं कक्षात्रयविशिष्टसदनस्य कृते आकाक्षाः साधनीयाः । तथैव गृहे क्रमशः नानाविधैः वेश्मपरिबर्हैः सज्जीकरण । एकस्य उपरि अपरमिति क्रमेण गृहीयवस्तूनाम् आत्मसात्करणम् । यथा यथा अधिकाधिकतया वस्तूनि आत्मसात्क्रियन्ते तथा तथा तव संस्कृतिस्तरः उन्नतोन्नतः इति परिगण्यते" इति ।

उपरिनिर्दिष्टं भौतिकवस्तुमात्रकल्पितं कल्याणसन्दोहार्थशास्त्रं गांधीमहोदयः तीव्रं भर्त्स्यति । गांधीयार्थशास्त्रं तु बोधयति यत् प्रत्येकं व्यक्तिः आत्मनः ईषणाः तावत्पर्यन्तं सीमिताः कुर्यात् यावन्मात्रेण तस्य देहधारणपोषणादिकं, नित्यव्यवहारस्य अत्यावश्यकसौकर्यादिकं च साधिते भवेताम् । एतत्परिमाणस्य उपरि वस्तूनां, विभवस्य च आत्मासात्करणं सुनीतिबोधानुसारम् अन्याय्यम् अधर्म्यं च । आवश्यकपरिमाणापेक्षया आधिक्येन आत्मसात्कृतः वस्तुविभवसञ्चयः समाजे इतरेषाम् उपयोगाय निक्षेपरूपेण समाजस्वाम्ये प्रदातव्यः इति गांधीयार्थशास्त्रस्य वादः । भौतिकवस्तुमात्रकल्पितम् उपभोगप्रधानम् अत एव नीतिबोधानन्वितम् अर्थशास्त्रं विकासशीलदेशानां कृते, तत्रापि भारतदेशस्य कृते नैव सूक्तमिति गांधीमहोदयः प्रत्यपादयत् ।

ईषणानां संयमः, तेषां यावत् अवश्यं तावत् एव पूरणम् इत्यादिकं कथं, कुतः वा व्यक्तेः समाजस्य देशस्य च सौख्यकल्याणाभिवृद्धये पारयेत् इति विषये विश्लेषणं गांधीयार्थशास्त्रसाहित्ये गांधीमहाभागस्य लेखनप्रमाणैः भूरिशः उपलभ्यते । प्रथमतः केचन मूलप्रश्नाः उद्भवन्ति । किं सर्वमपि सुखं व्यक्तेः कल्याणाय भवति ? किं सर्वविधानामपि ईषणानां पूरणं सुखाय कल्याणाय वा परिकल्पते ? वस्तुतः, सुखकारकाणां कल्याणकारकाणां वा ईषणानां वरणं कथं, कीदृशनिकषैः वा कर्तुं शक्यते ? इदम् अनुभवसिद्धं यत् तात्कालिकं अल्पकालिकम् वा सुखं

चिरकालिककल्याणाय नैव कल्पेत इति । यथा मादकद्रव्यसेवनं, सुरापानम् इत्यादिकम् अल्पकालिकसुखप्रदमपि दीर्घकालिकारोग्यं मनः शान्ति च विनाशयत् वास्तविककल्याणाय नैव भवति ।

ईषणानाम् इयत्ता—परिमितिः वा नैव विद्यते । मनसः संयमाभावे ईषणानां परम्परा एव उद्भूयते यस्याः अवधिरेव न विद्यते । ईषणानां दासेयत्वं राजकीयदासेयत्वादपि अधिकतया हानिकारकं सत् अन्ततो गत्वा संधारणे अशक्याम् उपभोगप्रवृत्तिं जनयति । ये मन्यन्ते यत् ईषणानां बहुलीकरणं समाजस्य देशस्य वा हितवर्धकोपायः इति नूनं तेषा अवगतिः भ्रान्तिरेव । ईषणानां निरन्तरबहुलीकरणेन तेषां पूरणार्थम् आत्मसम्मानस्य, मनः शान्तेः, समाधानप्रवृत्तेश्च त्यागः करणीयः स्यात् । अतः यत् बाह्यदृष्ट्या सुखकारि, हितवर्धकमिव दृश्यते तत् नूनं तथा न वर्तते, यतः जीवनस्य मौलिकतायाः विलोपनं प्राप्य सुखम् अनुभवितुं नैव शक्यते । भौतिकविकासेन साकं मौलिकतायाः अपि विकासः भवति इति नैव निश्चप्रचम् । अस्मिन् विषये गांधीमहोदयस्य विचाराः रस्किन् महोदयेन "अन्टु दिस् लास्ट" ग्रन्थे लिखितं विचारम् अनुमोदयति—"कश्चन देशः प्रभूतं विभवं सञ्चिनोति इतिमात्रेण सः विभवसञ्चयः समाजस्य हितं संसाधयति इति कथयितुं नैव शक्यते । विभवसञ्चयस्य वास्तविकं मौल्यं तत्सहकृतमौलिकतायाः स्वरूपम् अवलम्बते यथैव कस्यचित् गणितीयराशेः मौल्यं, तत्सहकृतचिन्हं मेलनद्योतकं वर्तते उत क्षयसूचकं वर्तते इति विषयम् अवलम्बते" इति ।

प्रत्येकं व्यक्तिः, समाजो वा वेशो वा भौतिकविकासेन साकं साकमेव मौलिकतायाः अपि विकासम् अवश्यं साधयतीति विविधदेशानां विकासपथस्य ऐतिहासिकविश्लेषणेन नैव अवगम्यते । अत एव मौलिकतायाः विस्तारस्य कृते विशेषः प्रयासः कार्यः । अनेकविधानाम् ईषणानां पूरणार्थं क्रियमाणः प्रयासः विविधविभवव्ययम् अर्थहानिं च आतनोति । ईषणानां निरन्तरपरम्परायाः पूरणार्थं विशेषमूलधनस्य, यन्त्राणां च आवस्यकता वर्तते । उत्पादनयन्त्राणाम् उपयोगेन सर्वत्र परिसरस्य कालुष्यं वर्धते । व्यवसायानां नित्यकर्मणां च यान्त्रिकताधिक्यनिमित्तं नित्यजीवने रचनात्मकता विलुप्येत । गांधीमहोदयः "यंग् इंडिया" इति

पत्रिकायाम् एवमलिखत्—"इषणाबाहुल्यस्य पूरणार्थं नरः उन्मत्तवत् जगति स्थानात् स्थानान्तरस्य व्यवधानं कालव्यवधानं, च तरसा लघूचिकित्सन् आत्मनः पाशवीयाभिलाषाः वर्धयितुं तासां पूरणोपायस्य शोधने च ब्रह्माण्डस्य कोणाकोणि भ्रममाणः भ्रान्तचित्तहतः लोलुम्पति"इति ।

"यः देशः ईषणापरम्पराः अनुचरन् तत्पूरणाय उत्पादनकार्यक्रमान् योजयति सः उत्पादनकर्मगृहेषु स्थिताभ्यः धूमनालीभ्यः निःसृतात् धूमात्, कोलाहलात्, तुमुलनिनादात्, हतप्रभः सन् अन्ते जनकल्याणहतकः परिवर्तते । एतादृशदेशस्य मार्गेषु असंख्याकानि यन्त्रचालितानि चतुश्चक्राणि द्विचक्राणि च वाहनानि जनसंमर्देन तुमुलितान्तराणि इतस्ततः सञ्चरन्ति । एषु सञ्चरन्तः जनाः स्वयं कुत्र प्रस्थिताः, किमर्थं प्रस्थिताः इति स्वयमेव न जानन्ति । एते अव्यवस्थितचित्ताः सन्तः आत्मनः एव विस्मरन्तः, पेटिकासु अतिपिनद्धं निधापिताः पशव इव वाहनेषु सञ्चरन्ति । अन्यच्च यदि प्रत्येकं जनाः चतुश्चक्र वाहनस्य स्वामिनः भूत्वा एतादृशवाहनेषु नगराणां रथ्यासु, इतरत्र महामार्गेषु च सञ्चरन्ति तर्हि सामान्यजनेभ्यः पादसञ्चरणार्थं स्थलमेव नावशिष्टं भवेत्" इति ।

गांधीमहोदयस्य अस्मिन् वादे अतिमहत्तापूर्णः सैद्धान्तिकसन्देशः वर्तते । केवलं भौतिकविकासमार्गम् अनुसरन् समाजः वास्तविकं सुखं नैव लभते । अतः बहुप्रयासेनापि प्रत्येकं व्यक्तीनां इषणानां संयमः साधयितव्यः इति सन्देशः ।

उपभोगविषयकप्रवृत्तिमनुलक्ष्य पाश्चात्यार्थशास्त्रानुसारेण प्रतिपादितप्रमेयानां गांधीयार्थशास्त्रे प्रतिपादितैः प्रमेयैः साकं तुलनात्मकविमर्शनं सूक्ष्मेक्षिकया एवं सङ्ग्रहीतुं शक्यते ।

| | **पाश्चात्यार्थशास्त्रानुसारिप्रमेयाः** | **गांधीयार्थशास्त्रानुसारिप्रमेयाः ।** |
|---|---|---|
| १) | ईषणाः विविधाः निरवधिकाश्च प्रत्युत उत्पादन विभवस्तु सावधिकः । | यदि ईषणाः प्रत्येकं व्यक्तेः जीवनावश्यकद्रव्यावधिसीमिताः तर्हि उत्पादनविभवः सर्वेषाम् ईषणाः पूरयितुमपि पर्याप्तः भवेत् । |

| | | |
|---|---|---|
| २) | उपभोगव्ययपरिमाणं व्यक्तेः आदायसीमितम् । | उपभोगव्ययपरिमाणं आवश्यकेषणासीमितम् । |
| ३) | उपभोगकर्तुः उद्देशः आत्मनः सुखस्य परमपरिमाणत्वसाधनम् । | उपभोगकर्तुः उद्देशः आवश्यकेषणानां पूरणम् । |
| ४) | भौतिकेषणानां निरन्तरं वैविध्यवर्धनमेव जीवनोद्देशत्वेन परिकल्प्यते । | भौतिकेषणानां सावधिकत्वसाधनमेव जीवनोद्देशः । |
| ५) | विविधेषणानिरूपितं तृप्तिफलकं आन्तिकसीमारहितम् । | विविधेषणानिरूपितं तृप्तिफलकस्य आन्तिकसीमा आवश्यकेषणापरिमाणसीमिता । |
| ६) | समाजस्य तृप्तेः परमपरिमाणत्वसाधनं समाजघटकप्रत्येकव्यक्तेः तृप्तिपरमतासाधनेन शक्यते । | समाजस्य तृप्तिपरमतासाधनम् आवश्यकेषणापूरणेन, तृप्तानां जनानां परमसंख्याकतासाधनेन च शक्यते । |
| ७) | इषणावैविध्यप्रवृत्तिमत्समाजः उत्पादनविभवानां निष्फलकापचयं प्रत्येकं व्यक्तेः मौलिकताह्रासं च अनुभवति । | आवश्यकेषणापूरणमात्रोद्देशकसमाजः केवलं पिष्टफलकश्रमं वाञ्छति । अनेन समाजे तर्पितेषणानां जनानां संख्या वर्धेत मौलिकताविकासश्च सम्भवेत् । |

के ते आवश्यकेषणाः इति प्रश्नस्य उत्तरं न तावत् सुलभसाध्यम् । तत्तद्देशकालसंस्कृतिपरम्परानुगुण्येन आवश्यकेषणानाम् अभिज्ञानं कर्तुं शक्यते । यथा इंग्लैण्ड आदि कटुशिशिरदेशेषु पशुलोमवस्त्राणि बीर् आदिपेयानि आवश्यकेषणाः इति परिगण्यन्ते । परं भारतादिदेशेषु एतानि आवश्यकेषणाः कथं भाव्यन्ते इति गांधीयार्थशास्त्रस्य वादः ।

प्रत्येकं व्यक्तेः सहजनिर्वृत्त्यर्थं हितावहं पोषकं च अन्नम्, आवश्यकवस्त्राणि सौकर्ययुक्तगृहाणि, स्वच्छाः उपलरहिताः रथ्याः, तासु मलनिर्गमप्रणालीव्यवस्था, स्वच्छपरिसराणि, देवगृहाणि, प्रतिग्रामे शैक्षणिकशालाः आरोग्यधामानि इत्यादीनि आवश्यकोपभोगवस्तूनि इति प्रतिपादयितुं शक्यम् ।

## "स्वदेशी" आन्दोलनम्

गांधीयार्थशास्त्रे "स्वदेशी" प्रमेयः अत्यन्तं प्रगल्भः प्रभावकारी च इति परिगण्यते । भारतदेशवासिभिः स्वदेशे उत्पादितानि वस्तूनि एव क्रेतव्यानि आत्मनः उपभोगाय न तु परदेशे उत्पादितानि वस्तूनि । "स्वदेशी" आन्दोलनस्य मुख्याङ्गरूपेण एवं निर्बन्धः आनुशासितः यत् ग्रामेषु ग्रामीणैः "चरखा" उपकरणम् उपयुज्य ततूकृतं—"खद्दर" इति नाम्ना रूढं—वस्त्रम् एव सर्वे नगरवासिनः ग्रामवासिनः देशप्रेमवन्तश्च धारयन्तु इति । "स्वदेशी" आन्दोलनं क्षिप्रमेव समग्रराष्ट्रे राजकीयस्वातन्त्र्यान्दोलनरूपं गृहीत्वा असंख्यजनानां चेतस्सु असाधारणदार्ढ्यभावम्, अपूर्वोत्साहं, सर्वत्यागप्रवृत्तिं च सचेतीचकार । "स्वदेशी" आन्दोलने राजकीयस्वरूपेण आविष्कुर्वति सत्यपि, तस्य मूलभूततत्त्वम् आर्थिकसौकर्यसाधनोद्देशेन दृढं बद्धं वर्तते । स्वीयदेशे एव विरचितानां वस्तूनाम् अर्थने अभिवर्धमाने सति भारतवासिभ्यः एव वेतनिकावकाशाः अभिवर्धिता भवेयुः येन सामान्यतः अल्पादायाः जनाः आयविकासमनुभवेयुः । स्वीयदेशवासिनां कल्याणस्य वर्धनं प्रत्येकं भारतीयस्य कर्तव्यम् ।

स्वदेशीतत्त्वं समीपदेशवासिषु अधिकानुरागधारणं कार्यम् इत्यात्मकम् अनुशासनम् आधारीकरोति । देशस्य अन्तः अपि तत्तत्प्रदेशीयजनाः तत्तत्प्रदेशेषु एव उत्पादितानि वस्तूनि क्रीणन्तु न तु दूरस्थितप्रदेशेषु निर्मितानि वस्तूनि । बँगालस्थितैः जनैः बँगालप्रदेशे उत्पादितानि, घृतं, वस्त्रम् इत्यादीनि एव उपभोगाय उपयुज्यन्तां न तु पोरबंदरप्रदेशे रचितानि वस्तूनि इत्यात्मकम् अनुशासनम् अपि "स्वदेशी" तत्त्वे निगूढमिति प्रतिपादितम् । एतादृशम् अन्तर्देशीयोपभोगप्रवृत्तिमपि निर्बन्धयत् अनुशासनम् अत्यन्तं क्लेशकरम् असाधु च इति आपाततः भाति । प्रायः यातायातसौकर्याणाम् अत्यन्तम् अपर्याप्ततादशायाम् उपभोगवस्तुक्रयणप्रवृत्तीनां

स्वस्वप्रदेशेषु निर्मितवस्तुषु सीमितीकरणम् अर्थशास्त्रविधानानुगुण्येन प्रदेशीयविभवस्य परमोपयोगित्वसाधने अनुकूलतामेव प्रकल्पयेत्। परन्तु अद्यतनकालेषु यातायातसौकर्येषु सुकरं लभ्यमानेषु तत्तत्प्रदेशीयविभवानां परमावध्युपयोगकरणार्थं तत्तद्विभवनिर्दिष्टवस्तुषु उत्पादनवैशिष्ट्यसम्पादनं साधु इत्येव मन्तव्यं स्यात्।

"स्वदेशी" तत्त्वं विशेषतः स्वदेशवस्तुदेशान्तरवस्तुविकल्प सन्दर्भे स्वस्वदेशाभिमानभावं मूलीकृत्य उपभोगवस्तुक्रयणप्रवृत्तिविषये स्वदेशनिर्मितवस्तुषु अनुरागवैशिष्ट्यं कार्यम् इति अनुशास्ति। गांधीमहोदयः यँग् इंडिया पत्रिकायाम् एवम् अलिखत्— "आस्ट्रेलियादेशे उत्पादितं यवधान्यं भारतदेशीययवधान्यात् उच्चतरगुणविशिष्टं वर्तते इति निमित्तेन आस्ट्रेलियादेशीययवधान्यस्य आयातः पापकारकः। परन्तु ओट्धान्यं भारतदेशे नैव उप्यते वर्ध्यते च इति निमित्तेन स्काटलाँडदेशात् ओट्धान्यस्य आयातः न्याय्यतया अङ्गीक्रियते यतः तादृशधान्यं तत्रैव विशेषतया उपचीयते" इति।

भारतदेशस्य ग्रामेषु स्थितैः असंख्याकैः दारिद्र्यदशायां परितपद्भिः जनैः निर्मितानां वस्तूनां—वस्त्रं, करकौशलवस्तूनि, इत्यादीनां-परदेशीयवस्तुभ्यः विभीषितस्पर्धायाः संरक्षणं, उत्तेजनम् इत्यादिकं गांधीमहोदयस्य मूलभूतोद्देशः आसीदिति अवगन्तव्यम्। ग्रामीणैः स्वयं तन्तूकृतं स्वदेशीयवस्त्रं सकलनगरवासिभिः अनिवार्यत्वेन धार्यताम् इति निर्बन्धे कृते सति, ग्रामवासिनां जीविकासौकर्यस्य सुव्यवस्थितता दृढीकृता भवेदिति "स्वदेशी" तत्वस्य अनुषङ्गः। कार्पासस्य तन्तूकरणव्यवसायः कृषकेभ्यः वत्सरे मासचतुष्टयपर्यन्तं, कृषिकर्मणः शिथिलतायां सत्याम्, अवश्यम् अधिकतरादायोपार्जनं सम्भावयति। बहुवारं वृष्टेः अपर्याप्ततादशायाम्, अथवा अनेकैः इतरकारणैः क्षामदशायां सन्निहितायां, तन्तूकरणव्यवसायः अल्पिष्ठमपि आदायं कृषकसमाजस्य कृते जनयितुं प्रभवेदित्येषः नूनं तृप्तिकारी विषयः। अयं व्यवसायः देशे अनेकलक्षसंख्याकेन देशवासिनां कृषिकर्मसु रतानां जनानाम् अधिकतरादायप्रापणार्थं निश्चितोपाय इव चकास्ति।

कृषकानां वार्षिकादायस्य अभिवृद्ध्यर्थं कृष्यतिरिक्तव्यवसायस्य आवश्यकता अस्ति उत न इति विषये तदानीं चर्चा सञ्जाता। गोपालकृष्णगोखलेमहोदयः प्रत्यपादयत् यत् कृषिभूमेः उत्पादकताविस्तारः, कृषिकर्मणः आधुनीकरणं, जलसेचनसौकर्यस्य वृद्धिः, अधिकोत्पादकतागुणविशिष्टबीजानां प्राप्तिः इत्यादयः क्रमाः प्राथम्येन व्यवहारीकरणीयाः इति। गांधीमहोदयः एतादृशक्रमाणाम् औचित्यम् अनुपेक्षयन्नपि कृषकाणां तन्तूकरणादीनाम् उपव्यवसायानाम् आवश्यकताम् अभिज्ञाय तेषां प्रोत्साहार्थं "स्वदेशी" सिद्धान्तं उद्घोषयामास। "खद्दर" वस्त्रस्य यन्त्रोत्पादितवस्त्रापेक्षया अश्लक्ष्णतरत्वात्, तत् वस्त्रं मध्यमवर्गीयजनानाम् आत्मसन्तोषेण एवम् स्वीकारार्हतां न प्राप्नुयात् इति मत्वा स्वातन्त्र्यप्रेमिणां जनानां मनःपरिवर्तनाय, तथा च तेषु नैतिकश्रद्धाप्रवृत्तिम् उपभोगसम्बद्धाभ्यासं च शोधयितुं "स्वदेशी" प्रेम आन्दोलनरूपेण सर्वत्र प्रसारितम्। इंग्लैंडदेशस्य महाराज्ञी एलिजाबेथ्—१ महाभागा अपि, इंग्लैंडदेशे उत्पादितवस्त्रस्य प्रोत्साहनार्थं, तद्वस्त्रात् श्लक्ष्णतरम् अपि हॉलंडदेशे समुत्पादितं वस्त्रं निषिद्धायातं व्यदधात्। एवं सा देशस्य सर्वैः जनैः इंग्लैंडदेशीयवस्त्रस्यैव धारणं निर्बन्धयामास। गांधीमहोदयः एतां इंग्लैंडदेशस्य आर्थिकनीतिं दृष्टान्तत्वेन उदाहृत्य आत्मनः "स्वदेशी" आन्दोलनं समर्थयति स्म। खद्दरवस्त्रस्य प्रचाररूपम् इदम् आन्दोलनं कटुनिर्बंधरूपेण नैव अवधार्यताम् परन्तु जनानां मनःपरिवर्तनं साधयित्वा आत्मसन्तोषेणैव खद्दरवस्त्रस्वीकारं यथा स्यात्तथा आन्दोलनस्य स्वरूपं भवेदिति गांधीमहोदयः वारं वारं स्पष्टीकरोति स्म।

स्वदेशीआन्दोलनेन खद्दरवस्त्रस्य कियान् प्रसारः समभूत्, उत ग्रामीणरङ्गे वस्त्ररचनारूपोपव्यवसायेन ग्रामीणजनानाम् आदायाभिवृद्धिः तृप्तिकरप्रमाणेन साधिता उत न इति विषये तज्ज्ञानां विवादः वर्तते। परिणामानां परिमाणसंख्यादिभिः मूल्यनिर्णयः एतादृशस्थूलरूपनीतीनां प्रसङ्गेषु नैव सूक्तः इत्यवगन्तव्यम्। इदं तु अवश्यम् अवधेयं यत् स्वदेशी-आन्दोलनेन देशे अनेकजनाः आजीवनावधि खद्दरवस्त्रधारणे सङ्कल्पं कृतवन्तः येन खद्दरवस्त्रधारणं देशप्रेम्णः सङ्केतायितम्।

## औद्योगीकरणम् उत्पादनपरिभाषा च

गांधीयार्थशास्त्रे देशस्य औद्योगीकरणविषये तदर्थम् उपयुज्यमानोत्पादन-परिभाषाविषये च अनन्यसाधारणविचाराः प्रतिपादिताः सन्ति । गांधीमहोदयः औद्योगीकरणस्य कटुविरोधी आसीदिति तस्य विविधलेखनैः आपाततः प्रतीयते । देशस्य आर्थिकविकासमार्गचयनविषये पाश्चात्यार्थशास्त्रम् एवं प्रतिपादयति "औद्योगीकरणं साधय, नो चेत् भ्रष्टोपचयो भव" इति । गांधीमहोदयस्तु प्रतिपाद-यति—"औद्योगीकरणं साधय, अत एव भ्रष्टोपचयो भव" इति । परन्तु सः बहुवारं स्पष्टीकरोति यत् औद्योगीकरणम् अवश्यमुपादेयं श्लाघ्यं च स्यात् यदि तत् जनानां नित्यजीवनस्य सौकर्यवर्धनाय हितोपचयाय वा उद्दिष्टं स्यात् । तथैव यन्त्रोपकरण-प्रयोगविषयेऽपि सः विशिष्टोद्देशमनुलक्ष्य अनुमोदते स्म । सः औद्योगीकरणस्य यन्त्रोपकरणोपयोगस्य च अविचारिताभ्युदयं न्यषेधयत् । तद्वादस्य प्रकारः एवमा-सीत्-यन्त्रोपकरणानां प्रयोगेण श्रमिकाणां कार्योद्योगावकाशाः अतिशयेन विघटिताः भवेयुः । यन्त्रोपयोगप्रचुरम् औद्योगीकरणं निरवधिकं यन्त्रोपयोगविस्तारमेव प्रणो-दयति । अनेन च त्वरिततरगत्या कार्योद्योगावकाशानां विघटनमेव संप्रवर्तेत । यन्त्रोपकरणप्रयोगनिमित्तम् एकप्रकाराभ्यः जीविकावृत्तिभ्यः निष्कासिताः श्रमिकाः औद्योगीकरणेन प्रचोदितस्य आर्थिकविकासस्य प्रभावेन किञ्चिदन्यप्रकारकजीवि-कावृत्तिषु अवश्यं नियोजिता भवेरन्निति वादं सः नैवान्वमोदयत् । औद्योगीकरणस्य स्वरूपमेव तादृशं वर्तते यत्र श्रमिकाः प्रत्येकं विशिष्टकार्येषु अतिशयेन दक्षाः सन्तः एकस्मात् कार्योद्योगात् अपरं कार्योद्योगं प्रति सुकरेण स्थानान्तरीभवितुं नैव प्रभ-वन्ति । तथैव विशिष्टेषु अन्यकार्येषु निष्णाततां संपादयितुं पुनः कार्यशिक्षणप्रयासः धनव्ययश्च करणीये स्याताम् । एतत्सर्वस्य अन्तिमपरिणामः अधिकाधिकं निरुद्यो-गतायाः वृद्धिस्वरूपं गृहीत्वा सामाजिकशान्तेः विघटनस्य मूलकारणं भविता इति गांधीमहोदयस्य अन्तर्भीतिरासीत् ।

यन्त्रोपकरणप्रचोदितम् औद्योगीकरणं समाजस्य आर्थिकतारतम्यव्यव-स्थायाम् अन्याय्यासमतां प्रवर्धयतीत्यपि आशङ्का गांधीमहोदयेन अभिव्यञ्जिता । एतादृशविकासपथे मूलधनस्वामिनः आर्थिकविभवानां स्वायत्ततां सम्पाद्य,

श्रमिकवर्गं आत्मनः न्यायानुचितलाभाय शोषयन्ति, तथा च आर्थिकव्यवसायाः नगरेषु एव एकत्र समाहृताः भूत्वा, नगराणां सामाजिकं, सांस्कृतिकं परिसरं च कलुषीकृत्य ग्रामीणविकासावकाशमपि विलोपयन्तीति तस्य दृढप्रत्ययः वादश्च आस्ताम् ।

यथा पूर्वमेव निवेदितं, गांधीमहोदयः यन्त्रोपकरणोपयोगविषये सम्पूर्णतया एव बद्धविरोधी न आसीत् । गृहेषु स्त्रीणां सीवनकार्येषु सौकर्यम् अभिवर्धयत् सिंगरसीवनयन्त्रं, सः सहृदयं श्लाघयन् सर्वत्रोपयोगार्थम् अन्वमोदयत् । सिंगरसीवनयन्त्रं श्रमिकश्रमं अपनोदयत् सीवनकर्मणः दक्षतां वर्धयति । तथा च सीवनयन्त्रं श्रमिकानां कार्योद्योगावकाशानपि नैव विघटयति । तथैव गांधीमहोदयस्य विचारधारायां शस्त्रचिकित्सासम्बद्धोपकरणानि, वैद्यकीयव्यवसायसम्बद्धयन्त्रोपकरणानि च नैव विरोधभाजनानि सङ्गच्छन्ते ।

गांधीमहोदयेन यन्त्रोपकरणप्रयोगमधिकृत्य, औद्योगीकरणमधिकृत्य वा प्रतिपादितः विरोधः प्रगल्भम् अर्थशास्त्रतत्त्वं सूचयतीति अवगन्तव्यम् । प्रत्येकं देशः आत्मनः मूलभूतविभवानां स्वरूपमनुलक्ष्यैव विकासमार्गस्य स्वरूपं निर्धारयेदित्यात्मकः प्रमेयः आधुनिके अर्थशास्त्रे अपि अनुमोदितः वर्तते । श्रमिकजनोद्वर्तदशायां स्थिताः विकासशीलदेशाः आत्मनः विकासमार्गस्य निदर्शनं तथा वृण्वन्तु येन उत्पादनपरिभाषाः, औद्योगीकरणस्य आकाराश्च श्रमिकजनानां कार्योद्योगावकाशप्राचुर्यलक्षिताः भवेयुः न तु मूलधनप्रयोगप्राचुर्यलक्षिताः ।

## विभवस्य निक्षेपव्यवस्था

गांधीयार्थशास्त्रं सकललोककल्याणार्थं समाजस्वाम्ये देशस्य विभवस्य निक्षेपं विदधाति । सम्पूर्णमूलधनप्रचुरं विकासनिदर्शनं तु विभवस्य स्वीयस्वाम्यं प्रतिपादयति । प्रत्युत सर्वजनहितविकासनिदर्शनं देशस्य समग्रविभवस्य केंद्रसर्वकारस्वायत्ततां प्रकल्पयति । परं गांधीयार्थशास्त्रम् उभयोः निदर्शनयोः मध्यममार्गं बोधयत्, विभवस्य स्वाम्यं निक्षेपधातृणां सविधे निधापयत्, तस्य उपयोगं समाजकल्याणसाधनार्थं निर्बन्ध्नाति । स्वाम्यनिक्षेपव्यवस्था, उपनिषत्सु बोधितं "सकल-

विभवस्य मुख्यस्वामी परमात्मा एव। प्रत्येकं मानवः आत्मनः जीवनसौकर्याय यावन्मात्रमावश्यकं तावन्मात्रमेव आत्मसात्कुर्वन् तदतिरिक्तं सर्वमपि इतरजनहिताय अर्पयेत्" इत्यात्मकं तत्त्वम् आधारतया गृह्णाति। निक्षेपव्यवस्था धनस्वामिभिः विभवविभुभिश्च आत्मसन्तोषेणैव अङ्गीकर्तव्या स्यात्। एतादृशव्यवस्थां निर्विच्छेदं प्रवर्तयितुं केचन व्यवहारनियमाः प्रकल्पितव्याः। यथा ईषणासंयमः, "स्वदेशी" प्रेम इत्यादयः जनानां मनःप्रवृत्तिपरिवर्तनं अवलम्बन्ते तथैव निक्षेपव्यवस्थाया यशस्वितया व्यवहारीकरणम् अपि जनानां मनः प्रवृत्तेः शुद्धतामवलम्बते।

औद्योगिकव्यवसायेषु उद्योगपतीनां श्रमिकवर्गेण साकं सम्बन्धस्य विषये विभवविन्यासप्रमेयः अत्यन्तं सङ्गतः इति बोद्धव्यम्। उद्योगपतीनां श्रमिकवर्गेण साकं सम्बन्धः प्रायः स्वस्वहितसाधनविषये परस्परविरुद्धप्रवृत्तिप्रणोदितः वर्तते इति सामान्यरूढ्यवगतिः। उद्योगपतिः आत्मनः लाभांशम् उत्कृष्टावधिपर्यन्तम् नेतुं प्रयतते। प्रत्युत श्रमिकवर्गः आत्मनः वेतनपरिमाणं, गृहसौकर्यविश्रामदिनसौकर्यवेतनाधिकदानादिलाभांशं च परमावधि प्रापयितुं वाञ्छति। आत्मनः हितोद्देशं साधयितुं श्रमिकवर्गः कार्यविरामरूपविप्लुतिम् अभीक्ष्णं प्रवर्तयति। प्रत्युत उद्योगपतयोऽपि आत्मनः लाभांशवृद्ध्यै, श्रमिकवर्गस्य नियमनार्थं च, उद्योगगृहद्वारस्य तालबन्धनरूपं क्रमं परिगृह्णन्ति। एवम् उभावपि-उद्योगपतिश्रमिकवर्गौपरस्परविरोधप्रवृत्तिमन्तौ भूत्वा उत्पादनव्यवसायस्य प्रतिरोधरूपान्तिमपरिणामं जनयतः। विभवविन्यासप्रमेये तु उद्योगपतिश्रमिकवर्गयोः सम्बन्धविषय व्यवहारीकृते सति, उद्योगव्यवसायं उभावपि आत्मन एव विभवं मन्यमानौ, परस्परविरोधप्रवृत्तिं सर्वथा न धारयतः इति गांधीयार्थशास्त्रस्य सन्देशः। विभवविन्यासव्यवस्थायां च उद्योगपतिः श्रमिकवर्गश्च, उभावपि प्रत्येकम् आत्मनः विशिष्टनिर्दिष्टोत्तरदायित्वं स्वीकुरुतः। उद्योगपतिः श्रमिकवर्गस्य सुखवृद्ध्यै सुकरकार्यपरिसरम्, अत्यल्पार्घस्य पुष्टिवर्धकाहारस्य सन्दानव्यवस्थां, आरोग्यावहवासपरिसरम्, उत्तमशिक्षणशालाव्यवस्थां, मनोरञ्जनसौकर्याणि इत्यादीनि आत्मतोषेणैव निर्वाहयति येन श्रमिकवर्गस्य मनसि उद्योगव्यवसाये विशेषास्था, 'उद्योगपतिः विशेषहितचिंतकः' इति गौरवं च उद्भवेत्। तथैव श्रमिकवर्गोऽपि

स्वसन्तोषेणैव आत्मनः उत्तमोत्तमकार्यतत्परतां, परमदक्षतां, निरवच्छेदेन उद्योगव्य-वसाये उद्योगपतिना साकं स्कन्धास्कन्धि निष्ठां, भारनिर्वाहप्रवृत्तिं च प्रदर्शयन् आत्मनः उत्तरदायित्वं निर्वाहयेत् । वेतनादिलाभवृद्धीनाम् अर्थनेन साकम् आत्मनः कार्यदक्षताकार्यनिष्ठतारूपम् उत्तरदायित्वमपि अभिज्ञाय, तदनुरूपं व्यवहारसन्धा-नादिकं कुर्यात् । एतत्सर्वं विभवविन्यासव्यवस्थायाम् आत्मसन्तोषेणैव व्यवहारी-करणीयाः नियमाः अनुशासनानि च । गांधीयार्थशास्त्रस्य अन्यरङ्गेष्विव अत्रापि निर्दिष्टजनानां मनः प्रवृत्तेः संयमः, परिवर्तनं, संशोधनम् इत्यादीनि लक्षणानि आव-श्यकपूर्वभावित्वेन प्रकल्प्यन्ते । विमर्शकाः अत एव मन्यन्ते यत् विभविन्यासव्य-वस्थायाः यशस्वितया व्यवहारे धारणम् अतीव दुष्करमिव अभवदिति । लोके परस्पराविश्वासधारणां धरन्त एव जनाः अतिसंख्याकाः दरीदृश्यन्ते । परं साधुप्र-वृत्तेः विकासाय च साधुप्रवृत्तिमतां धुरीणानां मार्गदर्शनस्य, निर्देशस्य च आवश्य-कता अङ्गीकरणीया एव । तादृशप्रवृत्तिमन्तः जनाः अपि विरलाः । अतः विभवविन्यासव्यवस्था अधिकतया आदर्शनिदर्शनरूपेण वैचारिकजगत्येव अव-स्थिता न तु विशेषतया व्यवहारपथे प्रत्यक्षीकृता इत्ययं शोचनीयो विषयः ।

**पिष्टकार्थं श्रमः**

गांधीयार्थशास्त्रे श्रमिकवर्गेण क्रियमाणः श्रमः, तस्य उद्देशः, तस्य फलं, श्रमप्रचोदकप्रवृत्तयः, श्रमोपरमरूपविश्रामावस्थायाः स्वरूपोद्देशादयः इत्यादिसूक्ष्म-वैचारिकविषयानधिकृत्य प्रगल्भविभावनानि विमर्शनपथमासादितानि । समाजस्य व्यक्तिः सर्वदा दैहिकं, बौद्धिकं वा श्रमं तन्वन्नेव आस्ते । एतादृशश्रमविधानप्रक्रमे त्रयः विषयाः अवगाहनार्हाः वर्तन्ते । प्रथमतः, श्रमकरणार्थं श्रमिकं किं प्रचोदयति ? द्वितीयतः, श्रमिककृतश्रमेण कानि वस्तूनि उत्पाद्यन्ते ? तृतीयतः, एवम् उत्पादितानां भौतिकवस्तूनां परिचर्याकर्मणां वा मौलिकता व्यक्तिं समाजं चानुलक्ष्य कीदृशी भवेत् ? इति । श्रमप्रचोदनानां स्थूलरूपेण विभागद्वयं कर्तुं शक्यते । प्रथमतः, श्रमिकः स्वयं प्रेरणया अथवा समग्रतया स्वहितचिन्तकस्य प्रेरणया श्रमविधानक-र्मणि रतो भवति । एतादृशश्रमधारणेन श्रमिकस्य, श्रमप्रेरकस्य च उद्देशाः एकीभूताः सन्ति । श्रमप्रचोदकः, श्रमकर्ता इति उभावपि परस्परहितपूरकौ सन्तौ अनन्यसाधा-

रणं मनःसमाधानं, परमां तृप्तिं, उत्तमम् आनन्दं च प्राप्नुतः । द्वितीयतः, श्रमिकस्य श्रमः श्रमिककृतहितविभावनया अपरिचितेन, आत्मन एव लाभादिकल्पनाभिः समाच्छन्नमानसेन अन्येन केनापि प्रचोदितः भवेत् । एतादृशप्रचोदितश्रमविषये श्रमिकस्य हितविभावनानि, श्रमकरणे प्रचोदनकर्तुः हितलाभादिविभावनानि च परस्परं विभिन्नानि भवेरन् । श्रमिकः प्रचोदकस्य प्रचोदनस्वरूपं, तस्य प्रेरणाप्रभावबलमनुलक्ष्यैव आत्मनः श्रमस्य स्वरूपं, परिमाणं, निष्ठावत्तां च विचिनोति । प्रचोदनक्रमाश्च भिन्नभिन्नस्वरूपाणि गृह्णन्ति । एकतः, श्रमप्रचोदकः ताडनभर्त्सनपीडनादिहिंसकक्रमान् अथवा तादृशक्रमधारणस्य विभीषिकाः परिगृह्णन् ईप्सितश्रमवर्तनं श्रमिकवर्गात् निष्कर्षयति । पूर्वतनकाले अधिकतया प्रचलिते दासक्रयविक्रयपद्धतिविशिष्टे स्वामिदासभावपरिसरे, एतादृशशोषणक्रमाः सामान्यरूढिमापन्नाः आसन् । दास्यत्वव्यवस्थायां क्रमशः शिथिलीभवन्त्यां सत्यां, तथैव पण्यप्रभावव्यवस्थायाम् आर्थिकव्यवहारेषु प्राचुर्यम् आसादयन्त्यां सत्यां, श्रमप्रचोदनक्रमः श्रमिकेभ्यः दीयमानवेतनपरिमाणस्य रूपं दधार । श्रमिकेभ्यः कार्योद्योगप्रदातारः श्रमप्रचोदनं साधयितुं, वेतनरूपप्रलोभनं, कार्योद्योगावकाशात् निष्कासनरूपविभीषिकां च उपयोजयन्ति । प्रलोभनविभीषिकानां सम्यक्तया संमिश्रणं विधाय, श्रमिकवर्गात्, तेन विभावितस्य हितस्य पूरणे असत्यपि, श्रमं निष्कर्षयन्ति । एतादृशश्रमधारणप्रसङ्गे श्रमिकवर्गः तादृशं मनःसमाधानम्, आनन्दं, तृप्तिं वा नानुभवति यादृशानुभवः स्वप्रेरणया अथवा स्वहितचिन्तकस्य प्रेरणया प्रवृत्तेन, इतः पूर्वं प्रतिपादितेन श्रमेण लब्धः भवेत् ।

गांधीमहोदयः श्रमप्रचोदनविषये पूर्वोक्तयोः विकल्पयोः मध्ये प्रथमविकल्पम् अधिकं श्रेयस्करम् अन्वमोदयत् । अस्मिन् विकल्पे अपि श्रमिकानां वेतनादिकम् अवश्यम् विद्यते एव । परन्तु वेतनादिकस्य उद्देशः प्राथम्येन श्रमप्रचोदने न अवसन्नः सन् मुख्यतः श्रमिकानां जीविकाधारणासौकर्यस्य प्रकल्पने निर्दिष्टः भवेत् । श्रमिकाः आत्मनः श्रमधारणया विलक्षणां तृप्तिमनुभवन्ति इति निमित्तेन वेतनपरिमाणं जीविकाधारणानुकूल्यतासीमितं भवितुं शक्यते । उद्योगपतिना साकं

श्रमिकवर्गस्य विभवविन्यासव्यवस्थायाः प्रस्थापितत्वात् उत्पादनव्यवसायः अधिकाधिकं समाजकल्याणस्य पारम्यं साधयितुं पारयेदिति गांधीयार्थशास्त्रस्य प्रमेयः ।

पाश्चात्यार्थशास्त्रे उत्पादितवस्तूनां विभागाः अनेकविधया क्रियन्ते । उपभोगयोग्यवस्तूनि, तत्रापि दीर्घकालिकोपभोग्यानि, अल्पकालिकोपभोग्यानि, परस्परसम्पर्कव्यवस्था इत्यादयः, उत्पादनसौकर्यवर्धकाः परिचर्याक्रमाः इत्यादिभिः विभागैः उत्पादनरङ्गः विभाज्यते । तत्र प्रत्येकं वस्तूनां परिचर्याक्रमाणां वा मौलिकतालक्षणैः पुनः अन्तर्विभागः नैव प्रकल्प्यते । उत्पादनव्यवसायेन शर्करा वा उत्पादिता भवतु, मादकद्रव्याणि वा उत्पादितानि भवन्तु, मानवकुलस्य प्रध्वंसनोपयोगिनां मारकायुधानां बांबादि-भयङ्करास्त्राणां वा उत्पादनं भवतु । सर्वविधवस्तूनां सर्जनम् आर्थिकोत्पादनमिति परिगण्यते तथा च सकलोत्पादनस्य धननिरूपितमौल्यं राष्ट्रियादायस्य परिसंख्याने समायुज्यते । अन्यच्च, उत्पादितवस्तुषु कानिचन वस्तूनि उत्पादकानां, तत्कर्मणि रतस्य श्रमिकवर्गस्य च, जीवनसौकर्यनिमित्तं साक्षादेव उपयुक्तानि भवन्ति । अन्यानि कानिचन केवलं पण्यस्थानेषु विक्रयार्थम् उत्पादितानि भवन्ति । एतादृशक्रयविक्रयव्यवसायः स्वदेशीयपण्यस्थानेष्वेव संप्रवर्तेत अथवा अन्यदेशीयपण्यस्थानेषु आयातनिर्यातरूपेण वा संप्रवर्तेत ।

गांधीयार्थशास्त्रे उत्पादितवस्तूनां विभजनं, वस्तूनाम् अन्तिमपरिणामान्, मौलिकलक्षणानि च अनुलक्ष्य त्रिवर्गेषु क्रियते । वस्तुषु अन्तर्गतानां मौल्यानां त्रयः विभागाः प्रकल्पिताः यथा-जीविकोपयोगिमौल्यानि, केवलं क्रयविक्रयरूपविनिमयप्रयोजनकमौल्यानि, तथा च विध्वंसोपयोगिमौल्यानि । जीविकोपयोगिमौल्यविशिष्टवस्तूनि मानवस्य व्यक्तित्वविकासं साधयन्ति । विनिमयप्रयोजनकमौल्यविशिष्टवस्तुषु मध्ये जीविकोयोगिवस्तूनाम् अपि संनिवेशनं भवितुं शक्यते । एवमेव जीविकोपयोगिवस्तूनामपि यावान् अवश्यः तावान् विनिमयोऽपि पण्यस्थानेषु भवेत् । तथाऽपि एतादृशविभजनस्य मुख्योद्देशः उत्पादनव्यवसायस्य मौलिकतामापनप्रमेयेन साकं सम्बन्धं प्रतिष्ठाप्य आर्थिकविकासनिदर्शनस्यापि मौलिकताप्रमेयपरिष्कृतत्वस्य सम्पादनमेव आसीदिति विमर्शकानां मतं वर्तते ।

गांधीयार्थशास्त्रे विध्वंसोपयोगिवस्तूनाम् उत्पादनमेव सर्वथा निषिध्यते । जीविकोपयोगिवस्तूनाम् उपलब्धिः साक्षादुत्पादनक्रमेण पण्यस्थानेषु विनिमयप्रसङ्गेन च तावती सम्पादयितव्या यावत्या देशे स्थितानां सर्वेषामपि मौलिकतापरिपुष्टतृप्तिपरिमाणं परमोत्कृष्टतावधिं प्राप्नुयात् ।

श्रमिकवर्गस्य श्रमविधानम्, उपरिनिर्दिष्टजीविकोपयोगिवस्तूनाम् उपलब्धि—परिमाणं, यावत् अवश्यं तावदेव सम्पादयितुम् उद्युक्तं स्यादिति गांधीयार्थशास्त्रस्य सन्देशः । एवं निर्दिष्टः श्रमिकवर्गस्य श्रमः "पिष्टकार्थं श्रमः" इति सामान्यनिरुक्त्या आकारितः । पिष्टकः नाम यवपिष्टकेन निर्मितः ब्रेड् इति पाश्चात्यैः आहूयमानः आहारविशेषः । पिष्टकशब्दः अत्र जीविकानिर्वाहाय आवश्यकत्वेन परिगणितानि सकलोपभोगवस्तूनि सूचयति । श्रमः एतादृशवस्तूनाम् उत्पादनवितरणकार्येषु नियोजितः भवेदिति, "पिष्टकार्थं श्रमः" इति आकारितस्य प्रमेयस्य तात्पर्यार्थः । पिष्टकार्थं श्रमः श्रमिकवर्गेण स्वप्रेरणया अथवा स्वहितचिंतकसुहृत्प्रेरणया उत्पादनकर्मणि नियोज्यते । एतादृशश्रमः, सर्वेषां हितचिन्तनं, स्नेहं, परिचर्यां च विदधन्, समाजस्य कल्याणं परमात्रधिं प्रति नेष्यति । अत्र जीवनोपयोगिमौलिकताविशिष्टवस्तूनाम् उत्पादने एव विशेषप्राधान्यं विभाव्यते । राष्ट्रियादायस्य परिसंख्यानं मौलिकतापरिष्कृतमौल्येन क्रियते । उपरिनिर्दिष्टानां त्रिविधवस्तूनां मध्ये जीविकोपयोगिवस्तूनां तुलनात्मकज्यायस्त्वं, विनिमयमात्रोद्देशकवस्तूनां तुलनात्मकज्यायस्त्वापेक्षया अधिकतरं मान्यते । राष्ट्रियादायपरिसंख्याने विध्वंसोपयोगिवस्तूनां तुलनात्मकगुरुत्वं शून्यमित्येव परिगण्यताम् इति अस्य प्रमेयस्य बोधः । राष्ट्रियादाये अनया पद्धत्या परिसंख्याते सति तादृशं परिमाणं देशस्य जीवनमौलिकतायाः स्तरं सूचयति । पाश्चात्यपद्धत्या सर्वेषामपि वस्तूनाम् उत्पादनमौल्ये मौलिकतामननुलक्ष्य गृहीते सति तादृशपरिसंख्यानं केवलं निर्मौलिकं जीवननिर्वाहस्तरं द्योतयति इति गांधीयार्थशास्त्रस्य वैशिष्ट्यम् ।

**उपसंहारः**

उपरिनिर्दिष्टानां सर्वेषामपि प्रमेयाणां परस्परसङ्गतत्वेन संगृह्य निर्देशं कृत्वा एव गांधीयार्थशास्त्रस्य समग्रतया अवगतिः सम्पादनीया । ईषणानां संयमः, स्वदे-

शीप्रेम, औद्योगीकरणस्य उत्पादनपरिभाषायाश्च राष्ट्रियार्थिकसमस्याः उद्दिश्यैव कार्योद्योगावकाशानां विकासाय परिकल्पनं, विभवविन्यासप्रमेयः, पिष्टकार्थं श्रमः, इत्यादिकानां सर्वेषां विचाराणां सङ्ग्रहेण गांधीयार्थशास्त्रबोधितं विकासनिदर्शनं प्राप्यते । गांधीयविकासनिदर्शनं केवलं वैचारिकप्रपञ्चे आदर्शनिदर्शनरूपेण आद्रियतां परं तस्य व्यवहारिकोपपाद्यता दूरतोऽपास्ता एव इति गुणदोषविवेचकाः विमर्शकाः आत्मनः मतं प्रतिपादयन्ति । इदं मतं विमर्शकानां पूर्वग्रहदोषप्रेरितम् इति उद्घोष्य विरम्यते अस्माभिः ।

* * * *

पञ्चमं प्रकरणम्

# महादेव गोविन्द रानडे महाभागस्य आर्थिकविचाराः

महादेवगोविन्द रानडे महाभागः भारतीयार्थशास्त्रस्य विचारधारायाः मूलपुरुष इति भावयितुं शक्यते। सः स्वयं विध्यनुरूपशिक्षणप्रणाल्या अर्थशास्त्रस्य अध्ययनं नैव कृतवान्। तथाऽपि स्वीयप्रतिभाबलेन देशस्य जनतायाः आर्थिकदशामनुलक्ष्य विश्लेषणं कुर्वन् अनेकान् मार्मिकान् अर्थशास्त्रीयप्रमेयान् प्रतिपादयामास। देशस्य दारिद्र्यम्, औद्योगीकरणं, कृषिरङ्गस्य आधुनीकरणं, रेल्वे आदीनाम् आर्थिकसौकर्याणां विकासः इत्यादिविषयानधिकृत्य प्रगल्भं विश्लेषणम् अकरोत्। आर्थिकनीतिषु परिवर्तनार्थम् अनेकान् नूतनविचारान् प्रत्यपादयत् च।

## दारिद्र्यविमर्शः

दादाभाई नौरोजीमहोदयः, रानडे महोदयश्च, उभावपि देशस्य दारिद्र्यमधिकृत्य आत्मनः उद्वेगं प्रकटयन्तौ दारिद्र्यनिवारणार्थं ये उपायाः आर्थिकनीतयश्च आवश्यकाः, तेषां विवेचनं प्रतिपादनं च प्रसभं चक्रतुः। नौरोजीमहोदयः बाह्यशोषणप्रमेयम् उद्घाट्य, देशस्य दारिद्र्यनिवारणं तदैव शक्यं भविता यदैव ब्रिटिश् शासकैः क्रियमाणम् आर्थिकशोषणं समापितं भवेत् इति प्रत्यपादयत्। प्रत्युत रानडेमहोदयस्तु दारिद्र्यविश्लेषणे विशेषतः देशस्य आन्तरिकरङ्गस्य अनुचितताम्, असङ्गततां च प्रतिपादयन् देशस्य दारिद्र्यनिवारणाय कृषिरङ्गोद्योगरङ्गयोः आधुनिकीकरणादिविविधोपायान् पुरतः कृतवान्। भारतदेशे दारिद्र्यस्य व्यापकता, परिमितिः, तीव्रता, इत्यादयः, नवदशतमशतके अष्टादशशतकापेक्षया अधिकतया

आसन् उत न इत्यात्मका: प्रश्ना: केवलं वैचारिकोद्बोधप्रतिपत्त्यर्थं चरितार्था: इति उद्घोष्य, दारिद्र्यं कियत्प्रमाणं वर्तते इति ज्ञातुम् उद्युक्ता: दारिद्र्यमापनप्रयत्ना अपि निष्प्रयोजनका: इति भर्त्सयामास । अनेन रानडेमहाभाग: बाढं क्रियाशीलप्रवृत्तिमान् अर्थशास्त्रज्ञ: आसीदिति विज्ञायते । स; आत्मन: एकस्मिन् अर्थशास्त्रीयनिबन्धे एवं प्रतिपादयति यथा—

"अस्माकं देशस्य नगरग्रामाणां रथ्यासु सञ्चरणं कार्यम् । अस्माकं देशे असंख्याका: जना: अत्यन्तं निकृष्टादायेन जीवनं यापयन्ति । अस्मासु मध्ये अनेक-लक्षाधिका: जना: प्रतिदिनम् आणा-द्वयस्यापि सम्पादनं कृच्छ्रेण कर्तुं पारयन्ति । अन्ये असंख्याका जना: तीव्रतया अपर्याप्ताशना: सन्त:, दुर्भिक्षदशामिव आपन्ना:, मन्दं मृत्युमुखे प्रविशन्त इव भासन्ते । कथञ्चित् पर्जन्यकाले यत्किञ्चिदपि विसं-वदति सति, एते अपर्याप्ताशना: जना: सहसा करालमृत्युपाशे एव पतन्ति" इति ("भारतदेशस्य आर्थिकविषये निबन्धा:"—रानडे)

देशस्य दारिद्र्यदशाया: अनेकानि कारणानि रानडे महोदयेन प्रत्येकितानि । देशस्य जनताया: कृषिरङ्गव्यवसायस्य उपरि अत्यधिकतया अवलम्बनं प्रथमं कारणम् । तन्तुवायचतुरा:, हस्तशिल्पकर्मसु निष्णाता:, तैलोत्पादनं, लेख्यपत्रनि-र्माणं, क्षौमवस्त्रव्यवसाय:, शर्करोत्पादनं, धातुविरचनम् इत्यादि आदायप्रापकव्यव-सायेषु बहुकालात् अधिगतचातुर्या: जनाश्च, ब्रिटन् देशात्, अन्यपुरोगामिविकसितदेशेभ्यश्च आयातितानाम् उद्योगवस्तूनां पण्यस्पर्धानि-मित्तम् उद्योगहीना भवन्ति स्म इत्येतत् द्वितीयं कारणम् । अनेकेषां ब्रिटिश् नियन्त्रि-तव्यवसायानां विविधरङ्गेषु ब्रिटन् देशीया: एव अधिकारिण: कर्मकाराश्च नियुक्ता आसन् । अनेन भारतदेशस्य विभूतिमवलम्ब्य व्यवसाये प्रवर्धमाने सत्यपि, व्यव-सायजनितादायस्य लाभ: अंशतोऽपि भारतदेशवासिभ्य नैव समासीदत् । केवलं कृषिरङ्गे; हस्तशिल्पकर्मणि च अवलम्बनं विहाय, असंस्कृतवस्तूनां परिष्करणेन, रचितवस्तूनां निर्माणेन, तादृशवस्तूनां व्यापारव्यवसायेन च राष्ट्रियादायस्य अत्य-धिकतया अभिवृद्धि: भवेत् । किं तु भारतदेशे उत्पादनरङ्गस्य न्यूनतानिमित्तं जनानां दारिद्र्यं बहुकालात् प्रचलितं वर्तते इति रानडे महाभाग: प्रत्यपादयत् ।

उत्पादनव्यवसायस्य उत्तेजनम् उत्पादनरङ्गस्य विकासार्थम् अनेकक्रमाणाम् व्यव-हारीकरणम् आवश्यकं भवेदिति तेन प्रतिपादितम् । उत्पादनरङ्गस्य अभिवृद्ध्यर्थं भूरिप्रमाणेन मूलधनस्य, साहसिकप्रवृत्तिमतां व्यवसायधुरीणाना, उत्पादनपरिपाटी-प्रावीण्यस्य च आवश्यकता वर्तते इति रानडे महोदयः दृढप्रत्ययेन उदघोषयत् । परन्तु देशे तेषाम् उत्पादनसामग्रीणां पर्याप्तप्रमाणेन प्राप्तिः न विद्यते, अतः प्राथम्येन एतेषां वृद्धिः साधयितव्या इत्यपि तस्य उद्बोधः आसीत् । १८९० तमे वर्षे भारतीयौद्योगिकपरिषदि उद्घाटनभाषणं कुर्वाणः रानडेमहोदयः एवं उवाच— "प्रतिवर्षम् अस्माभिः (भारतदेशे) सर्वकारस्य कोशार्थं सुवर्णं, रजतम् इति मूलधा-तूनां द्वादशकोटिरूप्यकाणां मौल्यपरिमितम् आयातः क्रियते । कोटित्रयमौल्यं सुवर्णं नवकोटिमौल्यं रजतं च । आयातितं समग्रमपि सुवर्णम् अल्पे एव काले देशस्य सामान्यजनतायां लीनं भूत्वा अदृश्यमेव भवति । रजतं च सप्तकोटिमौल्यं यावत् रजतनाण्यनिर्माणार्थं टङ्कशालां प्रति प्रेष्यते । अवशिष्टं रजतं जनेषु लीनमिव भवति" इति ।

उपरिनिर्दिष्टविश्लेषणेन इयं निर्णयात्मकावगतिः निष्पादिता रानडेमहोदयेन यत् देशविभवस्य अधिकोत्पादकविधानेषु प्रयोगः न क्रियते, तथा च जनाः धनसञ्-चयप्रवृत्तिमन्तः न वर्तन्ते इति । अतिन्यूनतमोत्पादकता, तथा च अत्यल्पसञ्चय-प्रवृत्तिः, अपर्याप्तमूलधनस्य प्राप्तिः इत्यादिकैः कारणैः देशस्य औद्योगीकरणस्य प्रगतिः कुण्ठिता भवति इति प्रतिपादयन्, रानडेमहोदयः तीव्रतरगत्या औद्योगीकरणं साधयितुं परदेशात् मुद्रासाहाय्यम्, उत्पादनपरिपाटीसाहाय्यं, परदेशीयव्यवसायप-तिभिः साकं मिलितोत्पादनप्रक्रिया इत्यादीन् समुद्बोधयामास ।

## औद्योगीकरणस्य प्रचोदनम्

रानडे महोदयस्य आर्थिकाभिवृद्विनीतेः प्रक्रिया निर्यातविकासोत्तेजनपरा आसीत् यावत् टिलक आदीनां मतम् आयातीयवस्तूनाम् आन्तरिकोत्पादनोत्तेजन-परं च आसीत् । अनेनैव कारणेन टिलक महोदयः आत्मना सम्पादिते "केसरी" नामके वृत्तपत्रे, रानडेमहोदयस्य नीतिबोधस्य कटुनिन्दां कुर्वाणः, रानडे महोदयं 'देशद्रोही'ति आकारयामास । "परदेशीयविभवस्य स्तुतिं गायन् महादेवः (महादेव

गोविन्द रानडे) नूनं भारतदेशस्य हिताचिन्तकः द्रोही वर्तते" इति । तदानीन्तने स्वदेशाभिमानोत्तेजनरूपान्दोलनसमये परदेशीयवित्तस्य, परदेशीयोत्पादानपरिपाट्याश्च अधिकमानः नूनम् अभिनन्दनार्हो नैव भवेदिति सामान्यनियमः । सामान्यजनतायाः मनोभावमनुलक्ष्य, सर्वमपि परदेशीयं निन्दनीयं, देशतः बहिः निष्कासनीयमिति दृढ़प्रवृत्तिः उद्बुद्धा भवत्येव । परन्तु रानडेमहोदयः देशहिताचिन्तकः नैवासीदिति दृढप्रत्ययोऽपि वर्तते । रानडे महोदयः देशस्य तीव्रतरगत्या औद्योगीकरणमेव दारिद्र्यनिवारणाय उत्तमोपाय इति मन्वानः अनेकनीतिक्रमाणां मध्ये, परदेशीयमपि अधिकोत्पादकतापरिष्कृतम् उत्पादनविधानं, तत्सहकारिभूतम् उत्पादनधनं च अवश्ये भवेतामित्येव उद्बोधयामास इति न विस्मर्तव्यम् । प्रायः यदि भारतदेशः तस्मात् कालादेव जगतः सर्वभागेभ्यः प्राप्यमानानि उत्पादनविधानानि आत्मसात्कृत्य, स्वदेशीयपरिसरे जनतायाः कार्यदक्षतां, शिक्षणभूमिकां च अनुलक्ष्य, तेषां परिवर्तनादिकं, संस्करणादिकं च साधयित्वा, आर्थिकविकासपथे प्रचलितः अभवत् तर्हि प्रायः स्वातन्त्र्योत्तरं सर्वेषु रङ्गेषु अविकसितदशां नैव अन्वभवत् इति वादः केवलम् ऊहापोहविषयः ।

औद्योगीकरणस्य उत्तेजनार्थम् औद्योगिकमूलधनवितरणसंस्थानाम् आवश्यकता वर्तते । तादृशसंस्थानां व्यवस्था भारतदेशे नैव वर्तते । अतः शीघ्रमेव एतादृशव्यवस्था व्यवहारीकर्तव्या इति रानडे महोदयः दृढं प्रत्यपादयत् ।

औद्योगीकरणस्य प्रचोदनार्थं सर्वकारेण विशेषतया विशिष्टनीतीना अङ्गीकरणम् अवश्यकम् । सर्वकारेण उत्तरदायित्वम् अनेकरङ्गेषु प्रगल्भरूपेण निभृतव्यम् इति रानडेमहोदयस्य निश्चलं मतमासीत् । उत्पादनव्यवसायस्य अभिवृद्धिः आर्थिकपरिसरस्य अनेकानुकूल्यप्रापकव्यवस्थामवलम्बते । अविकसितदेशेषु केवलं पण्यप्रभावभाविते परिसरे, सर्वकारस्य विशिष्टावष्टम्भं विना औद्योगिकव्यवसायस्य विस्तारः नैव भवितुं शक्यते । अतः सामान्यजनेभ्यः सञ्चितधनं सङ्ग्रहीतुं, निक्षेपधनागारस्य स्थापनम्, ऋणधनवितरणम्, ऋणधनस्य प्रत्यर्पणार्थं प्रयतनं, तदर्थं सूक्तसंस्थासौकर्यकल्पनं, नूतनोद्योगस्थापनार्थं विकासार्थं च अल्पीयसा वार्द्धुण्येन ऋणधनसन्दानस्य व्यवस्था, अत्याधुनिकस्य उत्पादनविधा-

नस्य शिक्षणार्थं परिभाषाशिक्षणसंस्थानां स्थापनं, रचितवस्तूत्पादनव्यवसायस्य सौकर्यार्थं दीयमानस्य ऋणधनस्य वार्धुण्यस्य च कृते धनागारसंस्थाभ्यः प्रतिभाव्यप्रदानं, दक्षकार्यकर्तृणां देशान्तरगमनार्थं, तादृशतज्ज्ञानां भारते आगमनार्थं च देशान्तराधिवासनियमानां, तत्सम्बद्धविधानानां च सौकर्यकरणं इत्यादिविषयेषु सर्वकारेण विशिष्टनीतिक्रमाणां प्रस्तुतिः कार्या इति सर्वकारस्य आर्थिकविकासप्रचोदनविषये सङ्गतं उत्तरदायित्वं स्फुटं प्रत्यपादयत् । सः सतर्कं विवेचनम् अकरोत् यत् सर्वकारेण एतेषां विविधानां कार्यक्रमाणां कृते अधिकं राजस्वधनं नैव व्ययितव्यं स्यात् । प्रत्युत, एते कार्यक्रमाः स्वयमेव विशिष्टं राजस्वमेव जनयित्वा निर्दिष्टव्ययधनं सम्पादयन्ति इति तस्य वादः आसीत् ।

रानडे महोदयः सर्वकारस्य विशेषोत्तरदायित्वं प्रतिपादयन्नपि सर्वकारभूयिष्ठं पूर्णसमाजवादनिर्वाहरतेषु देशेषु परिगृहीतम् आर्थिकविकासनिदर्शनं नैव अन्वमोदयत् । सर्वकारेण प्रत्यक्षतया अप्रत्यक्षतया वा आर्थिकविकासपरिपाट्यां परिणामकारिरीत्या साहाय्यं रचयितव्यमित्येव तस्य स्पष्टवादः आसीत् । कृषिसम्बद्धोत्पादनरङ्गस्य, शर्करोत्पादनव्यवसायस्य, खाद्यतैलोत्पादनरङ्गस्य, तमाखूत्पादनरगस्य, क्षौमवस्त्रोत्पादनं, क्षौमकीटसंवर्धनं इत्यादिविशिष्टोद्धृतरङ्गनां च विशिष्टनीत्युपक्रमैः उत्तेजनं, संवर्धनं च सर्वकारस्य उत्तरदायित्वम् इति स अवादीत् । सर्वकारः असार्वजनिकरङ्गे एव उत्पादनव्यवसायानां स्थापनं विकासं च तावत्कालं विशिष्टनीतिक्रमैः उत्तेजयतु यावत्कालम् असार्वजनिकरङ्गः आत्मनिर्भरः न स्यात् ।

भारतदेशस्य जनसंख्या, देशस्य क्षेत्रभूमेः प्रमाणमनुलक्ष्य अतीव अधिका वर्तते । जनसङ्ख्यायाः भारः क्षेत्रभूमेः उपरि पतति । कृषिकर्मानर्हां क्षेत्रभूमिम् अपि व्याप्य ताम् अतिप्रयासेन कृषिकर्मयोग्यां कृत्वा, कथञ्चित् जीवननिर्वाहं कर्तुमुद्युक्तायामपि जनतायाम् एतादृशक्रमस्य सीमा अचिरादेव प्राप्तो भवेत् । अतः भारतदेशस्य कर्मकाराः विदेशान् गत्वा तत्रैव स्थायिरूपेण निवसन्तः जीवनोपायं निर्वहन्तु इत्यभिप्रायेण देशस्य विदेशाधिवासनियमविधानानां परिष्करणं कार्यमित्युद्बोधयामास ।

## कृषिरङ्गस्य उत्तेजनम्

कृषिरङ्गस्य क्रान्तिकारिपरिवर्तनार्थं रानडेमहोदयेन प्रतिपादिताः विचाराः नूनं गमनार्हाः विद्यन्ते । भारतदेशस्य विकासहीनत्वरूपदशा विशेषतः कृषिरङ्गस्य अविकसितत्वनिमित्तेन प्रवृत्ता सती अविरतं वर्धमाना आस्ते इति रानडेमहोदयस्य दृढं मतमासीदिति पूर्वमेव कथितं किल । कृषिरङ्गसम्बद्धसर्वकारनीतिविषये रानडे-महोदयेन अनेकानि परिवर्तनानि सूचितानि । प्रथमतः, क्षेत्रसङ्गतराजस्वपरिसङ्ख्या-नविधौ रानडे महोदयेन प्रतिपादितं यत् क्षेत्रराजस्वपरिसङ्ख्यानं कृषकानां कृष्युत्पादनस्य रूप्यकेषु सम्पन्नं मूल्यमनुलक्ष्य कार्यं न तु तादृशोत्पादनस्य भौति-कराशिमनुलक्ष्य । तदानीं प्रचलितविधाने तु कृषेः कृष्युत्पादनस्य भौतिकराशेः शासनशासितभागः राजस्वरूपेण सर्वकाराय देयः आसीत् । कृष्युत्पादनस्य मूल्यस्य पण्यस्थाने विघटने भवति सति, तथा च मूल्ये पण्यप्रभावेन उपचित्यपचि-त्यात्मकं दोलायमाने सति कृषकानाम् उपरि असह्यः भारः पतति स्म । अन्यच्च, प्रायः कृषकाः अल्पधनाः आत्मनः जीवितनिर्वाहमपि समीचीनतया कर्तुं न प्रभविष्णवः सन्तः, ग्रामस्थर्णदायिभ्यः धनाधिपेभ्यः प्रभूतं धनम् ऋणरूपेण वारं वारं गृहीत्वा, तस्य प्रतिसन्दाने असमर्थाः भूत्वा ऋणभारेण च परं पीडितचित्ताः भवन्ति स्म । तथा च कृषिकर्मणि दत्तश्रमाः कृषकाः क्षेत्रस्य स्वामिनः न आसन् । क्षेत्रस्वामिनः अपि कृषकादन्याः सन्तः, कृषकेभ्यः प्रतिवर्षं कृष्युत्पादनस्य पूर्वनिश्चितम् अंशं बलादेव अपहरन्ति स्म । यः कश्चित् कृष्युत्पादनांशः अवशिष्टः, सः सकुटुम्बस्य कृषकस्य वर्षपर्यन्तं जीवननिर्वाहे यथाकथञ्चन पर्याप्त इव भवति स्म । एभिः कारणैः कृषिरङ्गे कृषकानां सन्निधौ आदायोद्वर्तस्य अभाव एव आसीत् । अतः कृषिरङ्गस्य आधुनी-करणार्थम्, उत्पादकतायाः वर्धनार्थं, कृषिरङ्गविकासाय च आवश्यकानां जलसेचन-व्यवस्था, क्षेत्रसंस्करणम्, आधुनिकोत्पादनपरिभाषायाः प्राप्तिसौकर्यम् अधिकोत्पादकतागुणविशिष्ट-बीजानां वितरणम्, उत्पादकताऽभिवृद्धिप्राप्त्यर्थं सारप्राप्तेः सौलभ्यम्- इत्यादि क्रमाणां व्यवहारीकरणार्थम् अवश्यम् अधिकमूलधनं कृषकस्य सविधे नैव अवशिष्टम् । अत एव कृषिरङ्गे मूलधनविन्यासः पर्याप्तप्रमा-णेन बहुकालात् नैव अभवत् । सर्वकारस्यापि मूलधनविनियोगः कृषिरङ्गे अल्पप्रमा-

णेन अनिश्चितरूपेण च प्रचलति स्म । कृषकेभ्यः कृषिभूमिराजस्व- परिसङ्ख्यानम् उत्पादनस्य मूल्यमनुलक्ष्य भवेदिति रानडे महोदयस्य वादः कृषिरङ्गे मूलधनविनियोगस्य भूरिगत्या वर्धनार्थं परिकल्पितः आसीत् ।

## कृषिभूमिस्वाम्यव्यवस्थायां परिवर्तनम्

कृषिरङ्गे भूमिस्वाम्यं प्रत्येकं कृषिकर्मणि रतेषु कृषकेषु निधातव्यमिति च रानडे महोदयस्य वादः आसीत् । समग्रकृषिभूमेः स्वायत्तता सर्वकारे वर्तते इत्यात्मकप्रथा भारतदेशे मुस्लीमराज्यकार्यभारसमये प्रारब्धा स्थिरीकृता च इति सः ऐतिहासिकप्रमाणैः प्रतिपादयामास । भारतदेशस्य पुरातनकालीनप्रथा हिंदूराजमहाराजैः अङ्गीकृता, बहुकालात् व्यवहारीकृता च, कृषकमेव कृषिभूमेः स्वामी इति स्वीकरोति स्म । एकस्मिन् प्रसङ्गे रानडेमहोदयः एवम् उद्बोधयामास ।

यथा हि—"भारतदेशे ब्रिटिश् शासनं मोहमडन् शासनात् परिगृहीतां 'सर्वकारः एव सकलभूमेः सर्वमुखीनसत्तावान्' इत्यात्मिकां प्रथां विहाय बहुप्राचीनकालात् हिंदूशासनेषु प्रचलितां तथा च व्यवहारीकृतां प्रथां क्रमशः व्यवहारीकरोतु । हिंदूशासनसम्प्रदाये राज्ञः अधिकाराः प्रजानां वैयक्तिकाधिकारैः सर्वप्रकारेण सीमिताः आसन् । राजा प्रजानां पितृस्थाने स्थितः सन् समग्रकृषिभूमेः अवेक्षकः, व्यवस्थापकः इव आस्ते । सः भूमेः विजेता अतः सर्वस्वाम्यवान् इति नैव परिगणितव्यम् । कृषीकृतकृषिभूमेः सर्वप्रकारकस्वाम्यं तेषु कृषकेषु एव पूर्णतया निहितं ये राज्ञे कृष्युत्पादनस्य विधिविहितं भागं कररूपेण प्रददति । यथा राज्यरक्षणकार्यभरव्ययार्थम् अनेके अन्ये विभवस्वामिनः कररूपेण राज्ञे धनं ददन्तोऽपि आत्मनः विभवस्वामित्वं नैव मुष्णन्ति तथैव कृषकोऽपि कृषिकरप्रदाताऽपि कृषिभूमिस्वाम्यं नैव मुष्णाति"इति ।

## कृषकऋणभारपरिहारः

कृषिरङ्गे कृषकस्वाम्यकृषिभूमेः परिमितिः प्रायः अतीव अल्पा आसीदिति निमित्तेन तादृशस्तोकपरिमितकृषिभूमेः कृषकानां वार्षिकादायः अपि अत्यल्पः आसीत् । अत्यल्पादायत्वात् कृषिकर्म सम्यक्तया निर्वोढुं न पारयन् कृषकः आत्मनः

कुटुम्बभरणपोषणादिकमपि सम्यक्तया निर्वाहयितुं नैव अपारयत् । सः ग्रामस्थ-ऋर्णदातृभ्यः धनिकेभ्यः भूरि धनम् ऋणरूपेण गृहीत्वा, ऋणप्रतिसन्दानभारेण बाढं जर्जरितः अभवत् । ऋणसन्दाता धनपतिः कृषकस्य शोचनीयजीवनक्रमस्य अवियोज्याङ्गम् इव सञ्जातः । सर्वकारोऽपि कृषकात् तदैव राजस्वं प्राप्नुयात् यदा कृषकः ऋणप्रदात्रा दीयमानस्य ऋणधनस्य प्रतिसन्दानाय व्यवस्थां कर्तुं पारयेत् इति रानडे महोदयस्य मतमासीत् । कृषकम् ऋणधनभारात् मोचयितुं, कृषिकर्मणः मूलधनविनियोगक्रमेण सर्वतोमुखीनविकासं साधयितुं च सर्वकारेण प्रयोज्यमानानां नीतिक्रमाणां परिवर्तनयोजनां रानडे महोदयः उद्बोधयामास । सः प्रत्यपादयत् यत् सर्वकारः विशेषतः कृषिकर्मोत्तेजकधनागारान् स्थापयेदिति । सर्वकारः कृषकस्य तदानीन्तनकालपर्यतं सञ्चितऋर्णधनं पूर्णतः अथवा भागशः क्षमापयित्वा, पुनः गृहीष्यमाणऋणधनस्य वार्धुण्यं प्रतिभावयन् (वार्धुण्यस्य कृते प्रतिभूः तिष्ठन्), कृषिभूमेः राजस्वप्रमाणम् अनतिशयितं कुर्वन्, कृषिकर्मणः सर्वतोमुखीनविकासार्थं विशेषमूलधनं पर्याप्तप्रमाणेन परिकल्पयन्, अत्यन्तं महत्त्वपूर्णां भूमिकाम् अवश्यं धारयेदिति तस्य उद्बोधः आसीत् ।

धनपतिभ्यः क्रियमाणशोषणात् कृषकस्य रक्षणार्थं रानडेमहोदयेन प्रतिपादितः उपायः क्रमशः सर्वकारेण अङ्गीकृतः, १८७९ तमे वर्षे "दाक्षिणात्यकृषकपरिहारविधिः" इति नाम्ना ("डेक्कन् एग्रिकल्चरल् रिलीफ् एँक्ट") विधिरूपेण शासनीकृतः । अस्य शासनस्य परिणामाः कृषकस्य कल्याणाय, श्रेयसे च अत्यन्तं शुभप्रदाः आसन्निति कतिपयवर्षानन्तरं कृतेन विश्लेषणेन सुस्पष्टमभूत् । परन्तु कृषिरङ्गस्य उद्योगरङ्गवत् मूलधनभूयिष्ठप्रकारेण वृद्धिः साधयितव्या इत्यात्मकः उद्बोधः नीतिकारैः, अन्यैः अर्थशास्त्रज्ञैश्च नैव सम्पूर्णतया अनुमोदितः । एतन्निमित्तं प्रायः कृषिरङ्गः विशेषत्वरितगत्या विकसितुं नैव अपारयत् इत्यवगन्तव्यम् ।

उपरिनिर्दिष्टैः रानडेमहोदयस्य विचारप्रसरैः इदमवगम्यते यत् रानडे महोदयः भारतीयार्थिकविकासाय मौलिकविश्लेषणं विधाय नूनं चिरकालिकपरिणामकारिनीतिप्रसरं समुद्बोधितवान् इति । इदं सर्वं तस्य बौद्धिकविस्तारं देशकल्याणचिन्तनप्रवृत्तिम्, असन्दिग्धविचारसरणिं च द्योतयति ।

**धूम्रशकटव्यवस्थाविषयकविमर्शः**

रानडे महोदयः तदानीन्तने काले प्रचलितेषु नीतिविकल्पेषु कः नीतिविकल्पः भारतीयजनानां दीर्घकालीनहितपोषणसंवर्धनादिभ्यः अनुकूलः स्यात्, कथं तादृश-नीतिविकल्पः व्यवहारीकरणीयः, सर्वकारस्य उत्तरदायित्वं किं, देशस्य संस्थास्वरूपे परिवर्तनं कथं साधनीयम् इत्यादिविषयानधिकृत्य आत्मनः विश्लेषणं, मतं च, स्पष्टशः प्रतिपादयति स्म। देशस्य धूम्रशकटव्यवस्थायाः विस्तारं सम्पादयितुं सर्वकारः भूरिप्रमाणेन मूलधनं तत्र संयोजयतु अथवा तावत्प्रमाणं मूलधनं देशस्य अभिवृद्धिप्रचोदकेषु, जनतायाः साक्षारताप्रसारककार्यक्रमेषु इतरोन्नतशिक्षण-संस्थास्थापनादिकार्येषु, अथवा कृषिरङ्गस्य जलसेचनव्यवस्थाविस्ताराय वा विनि-योजयतु इति नीतिविकल्पः चर्चाविषयः आसीत्। रानडेमहोदयस्य शिष्यस्थाना-पन्नः गोखलेमहोदयः विवेचयामास यत्—"सर्वकारः **ब्रिटिश्** उत्पादनव्यवसाय-धुरीणानां लाभसंवर्धनाय धूम्रशकटव्यवस्थायाः विस्तारं प्रकल्पयति। देशस्य हिताय धूम्रशकटव्यवस्था एव सर्वस्वं किं ? किं शिक्षणव्यवस्था कृषिभूमिसेचन-सौकर्यं वा महत्तां न धत्ते" इति वादं पुरतः कृतवान्। धूम्रशकटव्यवस्था ब्रिटिश् सर्वकारेण स्वार्थलाभायैव प्रथमतः प्रारब्धा इति आर्थिकेतिहासकारणां मतम्। इंग्लेंडदेशे **ल्यांकाशायर** स्थितेषु वस्त्रोत्पादकयन्त्रस्थानेषु भारतदेशात् धूलिक-ल्मषरहितकार्पासपूरणाय भारतदेशे कार्पासोत्पादनकृषिक्षेत्रात् कार्पासप्रेषणबृह-न्नौकापर्यतं कार्पासनयनार्थं धूम्रशकटव्यवस्था प्रारब्धा।

अन्यच्च देशे विप्लवप्रसङ्गानां शमनार्थं, नगररक्षिणां, सेनायाश्च स्थानात् स्थानान्तरं झटिति प्रयाणसौकर्याय धूम्रशकटव्यवस्था प्रयोजनं लभते स्म। धूम्र-शकटव्यवस्था असार्वजनिकव्यवसायसन्धैः स्वायत्तीकृता आसीत्। एते सन्धाः ब्रिटिश राष्ट्रियैः स्थापिताः सञ्चालिताश्च सन्तः, ब्रिटिशसर्वकारात् अनेकानेकार्थि-कसौलभ्यानि लभन्ते स्म। अल्पवार्धुण्यपणेन मूलधनर्णसन्दानं, परदेशमुद्राविनि-मयमूल्यस्य अस्थैर्येण प्रचोदितसंक्षयस्य परिहारार्थं धूम्रशकटरङ्गस्य कृते विनिमयमूल्यस्य स्थिरताप्रतिपत्तिः, विशिष्टप्रतिभाव्यानां प्रदानम् इत्यादिकम् सर्व-कारेण कृतमासीत्। एतत् सर्वं 'प्रलप्रतिभाव्यवस्था' (१८४४-६९) इति प्रथितम्

आसीत्। १८६९ तमवर्षानन्तरम् इयं व्यवस्था विच्छिन्ना अभवत्। परं १८८० वर्षादारभ्य सर्वकारेण अनेकप्रतिभाव्यानां सन्दानेन असार्वजनिकस्वाम्यपरिकल्पितपरिसरः पुनः विकासपथमायात्।

एतदात्मकपुरावृत्तस्य अवगतिं मनसि निधाय, अनेके देशहितञ्चितकाः धूम्रशकटव्यवस्थाविकासायैव भूरिमूलधनविनियोगस्य विरोधं कुर्वाणाः, शिक्षासौकर्यकृषिभूमिसेचनादीनां सामान्यजनहितसम्बद्धानां कार्यक्रमाणां गरीयस्त्वं प्रत्यपादयन्। रानडेमहोदयस्तु पूर्वग्रहदूषितमनोभावरहितः सन् सर्वविकल्पानां लाभहानिविश्लेषणं प्रत्ययजनकशैल्याम् आत्मनः प्रबन्धेषु कृतवान्। धूम्रशकटव्यवस्था देशे जनानां सञ्चारार्थं, दुर्भिक्षकाले आहारद्रव्यानां झटिति स्थानन्त् स्थानान्तरम् प्रति प्रेषणार्थं च महत् सौकर्यं प्रापयति ः कृषिसेचनसौलभ्यानि वृष्टेः शिथिलतायाम् अपेक्षितप्रमाणेन जलस्य सन्दानं कर्तुं नैव प्रभवन्ति। शिथिलवृष्टिवर्षेष्वपि जलसन्दानस्य सुनिश्चिततां प्रत्याययितुम् इतोऽप्यधिकभूरिप्रमाणकजलावरणरचनाकार्यक्रमाः प्रकल्पितव्याः भवेयुः। तदर्थम् अधुना विनियुज्यमानमूलधनापेक्षया अनेकगुणम् अधिकं मूलधनम् आवश्यकं भवेत्। प्रत्युत, देशवासिनां दारिद्र्यस्य अपचयं साधयितुम् औद्योगिकव्यवसायानाम् अभिवृद्धिः साधयितव्या येन भूरिशः जीविकोपायाः प्रकल्पिताः भवेयुः। अतः मूलधनस्य विनियोगविषये सम्भवनीयविकल्पेषु औद्योगिकव्यवसायरङ्गाय प्राथम्यं प्रदेयमिति रानडेमहोदयस्य वादः आसीत्। धूम्रशकटव्यवस्थायाः विस्तारं, तदर्थं मूलधनस्य सर्वकारेण योजितं विनियोगं च न विरोधयन् उद्योगव्यवसायानाम् अभिवृद्धेः प्राथम्यं च सतर्कं प्रतिपादयन् सर्वकारस्य नीतिक्रमस्य उपरि वैशिष्ट्यपूर्णं प्रभावं रानडेमहोदयः प्रतिष्ठापितवान्।

## अर्थशास्त्रस्य प्रमेयपद्धतिविमर्शनम्

रानडेमहाभागेन अर्थशास्त्रविश्लेषणपद्धतिमधिकृत्य उपन्यस्ताः विचाराः गमनार्हाः विद्यन्ते। सः प्रत्यपादयत् यत् अर्थशास्त्रं सर्वकालप्रयोज्यं, सर्वदेशेष्वपि समन्वितं, समाजस्य सकलभागस्यापि सुसम्मतं प्रमेयं नैव बोधयति। ब्रिटन् देशस्य आर्थिकं, सामाजिकं, राजकीयं, सांस्कृतिकं च परिसरं लक्ष्यीकृत्य प्रवृत्ताः अर्थशास्त्र-

विचाराः, प्रमेयाश्च तादृशपरिसरात् पूर्णतया विभिन्ने भारतदेशस्य परिसरे नैव प्रसक्ताः स्युरिति रानडे महोदयः सतर्कं बोधयामास । अर्थशास्त्रस्य प्रमेयाः नीतिक्रमबोधाश्च केवलं तर्कपरम्परया आकलिताः न भवेरन् यदि ते प्रसक्तदेशपरिसरे सुष्ठु समन्वितव्याः भवेयुः । अर्थशास्त्रस्य विश्लेषणपद्धतिः समाजस्य सर्वाङ्गीणैतिहासिकभूमिकाम् आत्मनः तर्कपरम्परायां सम्यक्तया विनिवेशयतु । अर्थशास्त्रचिन्तनतज्ज्ञैः अर्थशास्त्रे क्रियमाणानि धारणानि इति विषये सूक्ष्मेक्षणावेक्षणं कार्यम् इति रानडे महोदयः बोधयामास । सः तर्कपरम्परायां भविष्यवृत्तस्य पूर्वानुमानप्रसङ्गे सूक्तधारणानाम् आवश्यकता वर्तते इति अन्वमोदत । परन्तु एतादृशानि आवश्यकधारणानि समाजस्य व्यवहाररीतिमनुलक्ष्य विभावितव्यानि इति तस्य वादः आसीत् ।

अर्थशास्त्रस्य विश्लेषितप्रमेयाः अनन्यसम्बद्धरीत्या यथार्थतत्त्वं नैव प्रतिपादयन्ति । परन्तु अन्यसापेक्षमेव तत्त्वं प्रतिपादयितुं शक्नुवन्ति इति तस्य विवेचनमासीत् । अयम् अन्यसापेक्षतानियमः अर्थशास्त्रप्रमेयाणां सार्वत्रिकतां प्रतिक्षिपति । अस्मिन् विवेचने रानडेमहोदयः कतिपयपाश्चात्यार्थशास्त्रज्ञानां मतम् अन्वमोदत । जॉन् स्टुअर्ट मिल् नामकः अर्थशास्त्रस्य मूलपुरुषायितः तज्ज्ञः अपि अर्थशास्त्रस्य विश्लेषणं प्रमेयप्रतिपादनं च अन्यसापेक्षे एव स्याताम् इति अवादीत् । मिल् महोदयः, पुरतो गत्वा, केचन प्रमेयाः अत्यधिकम् अन्यसापेक्षाः, अन्ये केचन यत्किञ्चिदेव अन्यसापेक्षाः इति प्राबोधत । विभवोत्पादनसम्बद्धप्रमेयाः विशेषतया सार्वत्रिकयाथार्थत्वगुणविशिष्टाः । प्रत्युत विभवस्य विभागकल्पनासंबद्धप्रमेयाः अवश्यम् अन्यसापेक्षगुणविशिष्टा इति अवधेयम् । विभवस्य विभागकल्पनाक्रमः, तत्सम्बद्धनियमाश्च देशस्य जनतायाः शैक्षणिकसामाजिकार्थिकलक्षणानि तथा च सांस्थिकभूमिकां विकसितत्वदशां च अवलम्बन्ते इति स्फुटं किल । रानडेमहोदयः मिल् महाभागस्य इदं मतं पूर्णतया अन्वमोदत् ।

फ्रेडरीच् लिस्टमहाभागस्य विभवोत्पादनसामर्थ्यकल्पितं प्राबल्यं विभवप्राबल्यादपि अतिरिच्यते इत्यात्मकः प्रमेयः रानडे महाभागस्य बाढं संमतः आसीत् । विभवोत्पादनसामर्थ्यवन्तः तादृशसामर्थ्यविहीनापेक्षया अत्याधिकप्राबल्यवन्तः

भासन्ते । लिस्टमहाभागस्य "आर्थिकविकासस्य विविधाः अवस्थाः" इत्यात्मकं प्रमेयमपि रानडेमहोदयः पूर्णतया अनुमोद्य, भारतदेशस्य अविकसितत्वदशामनु-लक्ष्य, औद्योगीकरणस्य त्वरितगत्या साधनार्थं सर्वकारेण सूक्तनीतीनां परिग्रहः कार्यः इति आग्रहं दधार ।

रानडे महाभागः स्वयम् अर्थशास्त्रस्य शिक्षणविधिप्रकारेण शिक्षणम् अलभमानोऽपि जगतः प्रसिद्धानाम् अनेकेषाम् अर्थशास्त्रविदुषां विचारैः दृढं परिचितः आसीदित्येत् तस्य उन्नतव्यक्तित्वं प्रतिभाविस्तारं च द्योतयति ।

* * * *

## षष्ठं प्रकरणम्

# गोपालकृष्णगोखलेमहाभागस्य आर्थिकविचाराः

गोपालकृष्णगोखलेमहाभागः दादाभाईनौरोजीमहाभागस्य समकालीनः आसीत्। एषः एतच्छतकस्य प्रारम्भकाले, देशस्य आर्थिकराजकीय-सामाजिकविचाररङ्गेषु महान्तं प्रभावं रचयामास। तस्य आर्थिकविचाराः न केवलं तदानीन्तनकाले सङ्गताः इति स्वीकृताः आसन्। परन्तु, तेषाम् औचित्यं, साङ्गत्यं च अधुनातने आर्थिकपरिसरे अपि दरीदृश्येताम्। १९०२ तमे वर्षे एकस्यां परिषदि गोखलेमहाभागः सर्वकारस्य राजस्वव्ययविषयानधिकृत्य आत्मनः विचारान् एवं प्रतिपादयति—'भारतदेशस्य सर्वकारस्य राजस्वं, व्ययक्रमं च अनुलक्ष्य निर्देशन-कारिनियमाः निम्नलिखिताः भवन्तु। सर्वकारः व्ययविषये अतिशयितं नियमिततां, निग्रहं च व्यवहारीकरोतु। सर्वकारस्य सर्वासामपि शाखानां व्ययपरिमाणम् अत्यन्तं विघटितव्यम्। तथा च सर्वकारस्य विविधविभागेषु कार्यदक्षता विशेषतया वर्धयितव्या। जनेभ्यः कराकरणस्य परिमाणं यावत् शक्यं तावत् लघूक्रियताम्। अल्पतमकराकरणेन देशस्य उद्योगव्यवसायानां विघटनभीतिं विना विकासस्य सदवकाशः अभिवर्धेत' इति।

### राजस्वव्ययविषये उद्बोधः

१९०८ तमे वर्षे सर्वकारस्य वार्षिकायव्ययपत्रमधिकृत्य प्रसक्तायां चर्चायां भागम् उद्वहन् गोखलेमहाभागः एवम् उदघोषयत्—"सर्वकारेण राजस्वस्य बह्वंशः देशस्य जनतायाः भौतिकसम्पदः नैतिकाढ्यतायाश्च विशेषाभिवृद्ध्यर्थं विनियोक्तव्यः। जनतायाः कल्याणाभिवृद्धये मूलभूतकार्यक्रमेषु सर्वकारेण

पुरोगामितया उत्तरदायित्वस्य निर्वाहः कार्यः । शिक्षणसौकर्याणां विकासाय, सामान्यजनतास्वास्थ्याभिवृद्धिव्यवस्थायाः सौष्ठवार्थं, कृषिकर्मणः विस्ताराय, जलसेचनक्षेत्रशोध्नादिसौकर्याणां बहुलीकरणार्थम्, अधिकोत्पादकतागुणविशिष्टबीजानां वितरणव्यवस्थायाः साङ्गत्याय, उद्योगव्यवसायानाम् आवश्यकसौकर्याणाम् सम्पादनार्थं च सर्वकारः आत्मनः आदायस्य व्ययं करोतु" इति गोखलेमहोदयः दृढं प्रत्यपादयत् । सर्वकारेण शासननिर्वाहाय रक्षणसेनापोषणाय च आवश्यकतया आधिक्येन विभवविनियोगः क्रियते इति सविलापम् अधिक्षेपम् आख्याय दादाभाई नौरोजीमहोदयेनापि इतः पूर्वमेव उद्घोषितं दोषारोपणं सः समर्थयामास ।

सर्वकारेण निक्षिप्तानां कराणां परिमाणं देशस्य जनानां करसन्दानसामर्थ्यापेक्षया अत्यधिकं वर्तते इति गोखलेमहोदयस्य दृढप्रत्ययः आसीत् । आर्थिकविकासोपयोगिकार्यक्रमाणाम् उत्तेजनार्थं, जनसामान्यस्य कल्याणविस्तारसिद्ध्यर्थं च सर्वकारीयव्ययः एधितव्यः इत्यपि सः प्रत्यपादयत् । कराकरणप्रमाणस्य लघूकरणेन साकं साकमेव सर्वकारीयव्ययस्य जनताकल्याणसाधनोद्देशेन एधनं साध्यं वर्तते यदि सर्वकारेण शासनविभागार्थं, रक्षणासैन्यपोषणार्थं च अतिरिच्य क्रियमाणस्य, व्ययस्य परिमाणं विघट्यते इत्यात्मकम् अर्थशास्त्रप्रमेयप्रमाणितं वादं पुरतः कृतवान् । सः विशिष्टरङ्गेषु कराकरणपरिमाणस्य एधनमपि अन्वमोदयत् यदि एतादृशम् एधनं जनताहितवर्धनार्थं परिणमेत् । उदाहरणार्थं सः प्रत्यपादयत् यत् **तंबाकू**पदार्थस्य, मादकपदार्थानां च विषये, तेषाम् उपभोगपरिमाणस्य विघटनोद्देशेन कराकरणस्य एधनं साधु एव स्यात् । परन्तु एवं कराकरणे एधिते सति तेन सम्पादितं राजस्वं शिक्षणसौकर्याणां, जनतास्वास्थ्याभिवृद्धिकार्यक्रमाणां च विस्तारायम् विनियोक्तव्यं इति गोखले महोदयेन निर्दिष्टम् ।

**कराकरणस्य लघूकरणबोधः**

देशे स्थितानां दरिद्राणां, समाजस्य पराक्कृतवर्गस्य च करभारस्य लघूकरणोद्देशेन कराकरणपद्धत्यां परिवर्तनम् अवश्यं साधनीयम् इति गोखले महोदयस्य आग्रहः आसीत् । सः लवणकरपरिमाणस्य अन्याय्यतां वारं वारम् उदघोषयत् । कराकरणव्यवस्थाविषये सः स्वीयं प्रगल्भमेकं प्रमेयमेव प्रास्थापयत् । करपरिमा-

णस्य विघटनं, कराकरणमूलस्य विभवपरिमाणस्य विस्तारः, अत एव राजस्वपरिमाणस्य एधनम् इति विषयत्रयं तस्य राजस्वसिद्धान्तस्य भित्तिमूलायितम् ।

गोखले महाभागः कृषिक्षेत्रे निक्षिप्यमाणं करप्रमाणं लघूकरणीयमिति आग्रहं चकार । कार्पासे निक्षिप्यमाणः उत्पादनकरः भूरि वर्तते । अनेन कार्पासवस्त्रोपयोक्तृणां दरिद्राणाम् उपरि अधिकशुल्कभारः निपतेत् इति प्रत्यपादयत् । कार्पासोत्पादनकरस्य आधिक्येन कार्पासस्य मौल्यवृद्धिः भवेत् । अनेन कार्पासवस्त्रोत्पादकाः वस्त्रोत्पादनव्यये आधिक्यमभूदिति कारणेन कार्पासवस्त्रस्य मौल्यं वर्धयन्ति । अनेन कार्पासवस्त्रोपभोगकर्तृणाम् उपरि भारः वर्धते । एवम् अधिककराकरणेन दरिद्राः एव अधिकतया पीडिताः भवेयुः इत्यात्मकः गोखलेमहोदयस्य वादः तस्य समाजकल्याणप्रज्ञाम् अभिज्ञापयति ।

**केन्द्रसर्वकारराज्यसर्वकारयोः सम्बन्धः**

गोखलेमहोदयः सर्वकारीयराजस्वसिद्धान्तविषये केन्द्रसर्वकारस्य स्थानीयराज्यसर्वकारैः साकं कीदृशः आर्थिकसम्बन्धः निरूपितव्यः इति प्रश्नमधिकृत्य प्रगल्भविचारान् प्रकटीचकार । कैन्द्रसर्वकारः राष्ट्रस्य अभिवर्धमानराजस्वस्य अधिकांशम् आत्मसात्कृत्य स्थानीयराज्यसर्वकारस्य स्वाम्ये अल्पांशमेव राजस्वम् अवशेषयति । केन्द्रसर्वकारस्तु आत्मनः अतिशयितशासनव्यवस्थायाः, अत्युपचितरक्षणासैन्यस्य च निर्वाहार्थम् अतिमात्रव्यये निर्बद्धो वर्तते । प्रत्युत, राज्यसर्वकारस्य उत्तरदायित्वं राष्ट्रजनताकल्याणाभिवृद्धिविषये अतीव महत्तरं वर्तते । अतः केन्द्रसर्वकारः आत्मनः व्ययपरिमाणं विघटयन् समुच्चितराजस्वे केवलं त्रिषु द्विभागम् आत्मसात्कृत्य, अवशिष्टं राजस्वं राज्यसर्वकारस्य स्वाम्ये प्रददतु इति गोखलेमहोदयस्य वादः आसीत् । राज्यसर्वकारः आत्मनः राजस्वस्य न्याय्यम् अंशं सम्पादयितुं केन्द्रसर्वकारं प्रति दैन्येन याचनां कर्तुं नैव निर्बद्धो भूयादिति तस्य आशयः नूनम् अभिनन्दनीयः ।

**आयव्ययप्रमेयाः**

गोखलेमहोदयः अनेकान् नूतनकराकरणक्रमान् सूचयामास । जूटनिर्यातस्य उपरि, चाय् निर्यातस्य च उपरि करनिक्षेपं विधाय सर्वकारराजस्वस्य वृद्धिं कर्तुं शक्यते इत्यात्मकः तस्य करप्रस्तावः अधुनाऽपि व्यवहारीक्रियमाणः वर्तते ।

गोखलेमहोदयेन सर्वकारस्य आयव्ययव्यवस्थामधिकृत्य अनेके सैद्धान्तिकविचाराः प्रतिपादिताः । आयव्ययपत्रिकायां वर्तमानपरिसङ्ख्यानं, मूलविभवसंबद्धपरिसङ्ख्यानम् इति द्विविधे परिसङ्ख्यानपत्रे वर्तेते । वर्तमानपरिसङ्ख्यानपत्रे प्रसक्तसमये सङ्गताः आयव्ययाः तेषां समीकरणं च प्रदर्श्यन्ते । विविधकराकरणक्रमैः सञ्चीयमानराजस्वपरिमाणं तथैव शासनव्यवस्था, शिक्षणसौकर्यं, जनतास्वास्थ्यसेवा इत्यादि वर्तमानकालिकव्ययकार्यक्रमानधिकृत्य क्रियमाणं व्ययपरिमाणं इति आयव्ययाः प्रस्तूयन्ते । मूलविभवसम्बद्धपत्रिकायां दीर्घकालं प्रवर्तमानविभवनिमित्तं प्रस्तुताः आयव्ययाः सङ्गृह्य प्रदर्श्यन्ते । वर्तमानकालिकायव्ययपत्रिकायां आयोद्वर्तः सम्पादितः चेत् सः अनेकोद्देशानुद्दिश्य व्ययीकर्तुं शक्यते ।

तदानीन्तनः सर्वकारः अतिशयितकराकरणादिक्रमान् प्रयोज्य आयोद्वर्तं जनयित्वा तादृशोद्वर्तं दीर्घकालिकविभवोत्पादककार्यक्रमेषु उपयुनक्ति स्म । प्रायः शकटवाहनसौकर्यस्य (रेल्वे) विस्ताराय आयोद्वर्तस्योपयोगः क्रियमाणः आसीत् । इयं परिपाटी नैव समीचीना, अर्थशास्त्रसिद्धान्तानुसारं प्रकामम् अदक्षा पद्धतिः इति गोखलेमहोदयः वादं पुरतः कृतवान् । तस्यैव सिद्धान्तः एवमासीत् । प्रथमतः तावत् सर्वकारः यथाकथञ्चन वर्तमानायपत्रे राजस्वोद्वर्तमेव न जनयेत् । राजस्वोद्वर्तार्थम् अतिशयितकराकरणे सर्वकारस्य प्रवृत्तिः श्यात् । इयं प्रवृत्तिः देशस्य धनहीनजनेभ्यः एव अधिकभारनिक्षेपिकी भवेदिति तस्य भीतिः । राजस्वोद्वर्ते न्याय्यकराकरणैः एव निष्पादिते अपि तस्य विनियोगः दीर्घकालिकविभवोत्पादनार्थं वा सर्वकारीयभारस्य लघूकरणार्थं वा नैव कार्यः इति सः दृढं प्रत्यपादयत् । वर्तमानकालिकव्ययकार्यक्रमेषु एव सामान्यजनानां कल्याणवर्धकाः, शिक्षणसौकर्यविकासः, स्वस्थ्याभिवृद्धिः, नित्यजीवने आरोग्यावहपरिसरव्यवस्था, कृषिकर्मणि उत्पादकतावृद्ध्यै आवश्यकसौकर्याणि इत्यादयः कार्यक्रमाः पूर्वमेव परि-

कल्पितपरिमाणापेक्षया अधिकपरिमाणेन निरूपयितुं शक्यन्ते । अतः राजस्वोद्वर्तः एतादृशविशिष्टकार्यक्रमान् विशेषेण निरूप्य तेषां कृते एव विनियोक्तव्यः इति नूतनं सिद्धान्तमेव प्रत्यपादयत् । अयं सिद्धान्तः आयव्ययसम्बद्धे अर्थशास्त्रे नवीनविचारधारायाः भित्तिमूलायितः सन् अधुनाऽपि विशेषविमर्शनविषयः सञ्जातः वर्तते ।

**व्यापारनिर्बन्धनीतिविमर्शः**

अन्ताराष्ट्रियव्यापारसम्बद्धनीतिविषये पूर्णतया विनिर्बम्धव्यापारव्यवस्था अथवा देशीयोद्योगव्यवसायगोपनोद्देश्यका निर्बम्धनीतिमूलितव्यापारव्यवस्था इति व्यवस्थाविभेदविषये अर्थशास्त्रज्ञानां मध्ये अधुना अपि विवादास्पदविमर्शः वर्तते । तदानीमपि एतद्विषये मतभेदः आसीत् । केचन अर्थशास्त्रज्ञाः, सकलदेशानां विभवानां सार्थक्यपारम्यं सम्पादयितुं निर्बन्धरहितव्यापारव्यवस्था एव परमोत्तमनीतिः इति प्रतिपादयन्ति । एते पुनः प्रत्येकं देशः आत्मनः राष्ट्रियविभवानां सार्थक्यपारम्यं सम्पादयितुम् एकाकी अपि निर्बम्धरहितव्यापारव्यवस्थां व्यवहारीकरोतु इत्यपि निर्देशयन्ति । अन्ये केचन अर्थशास्त्रज्ञाः, विकासपथे प्रारम्भदशायां स्थिताः देशाः आत्मनः शैशवावस्थास्थितोद्योगव्यवसायानां पोषणार्थं, विकसितदेशानां पुरोगामिव्यवसायेभ्यः प्रवर्तितस्पर्धात्मकपरिसरात् रक्षणार्थं च, व्यापारनिर्बन्धनीतीनां धारणम् आवश्यकं न्याय्यमपि इति प्रतिपादयन्ति ।

गोखले महोदयः देशस्य शैशवावस्थास्थितोद्योगव्यवसायानाम् अभिवृद्धिम् इच्छन्नपि निर्बम्धरहितव्यापारव्यवस्थाम् एव तत्कालीनपरिसरमनुलक्ष्य परमोत्तमनीतित्वेन अन्वमोदयत् । अस्मिन् विषये एतादृशनीतेः औचित्यसमर्थनार्थं प्रदत्ताः वादाः अत्यन्तं गमनार्हाः विद्यन्ते । स्पर्धात्मकपरिसरात् रक्षणे कृते सति प्रायः ब्रिटिश् स्वाम्ये स्थिताः उद्योगव्यवसायाः एव तल्लाभम् आत्मसात् कुर्वन्ति । आयातनिर्बन्धरूपेण रक्षणेन भारतदेशस्य असंख्यनिर्धनिकेभ्यः न कोऽपि विशेषलाभः भवेत् । उद्योगपतयः सर्वकारेण साकं निकटसम्बन्धं धृत्वा स्वीयोद्योगरङ्गस्य बाह्यस्पर्धायाः रक्षणार्थं सर्वकारस्य नीतिकाराणाम् उपरि विशिष्टप्रभावं निक्षिपन्ति । अनेन तान्येव वस्तूनि, ते एव व्यवसायाः सर्वकारनीतिप्रसरेण रक्षिताः भूत्वा वृद्धिं लभेरन् एषां स्वामिनः सर्वकारस्य नीतिकाराणाम् उपरि विविधप्रकारैः उत्कोचप्रदा-

नादिवाममार्गैरपि प्रभावं रचयेयुः । अतः, आयातस्पर्धारक्षणनीतिभिः अनुचितवस्तु-व्यवसायानामेव रक्षणप्रचोदितवृद्धिः भवेत् । जनकल्याणसम्पादकवस्तुव्यवसा-यानां रक्षणप्रचोदितवृद्धेः अवकाश एव प्रमुषितः भवेत् इत्यादिभिः वादैः प्रेरितः गोखलेमहोदयः स्पर्धारक्षणनीतिमेव न अन्वमोदयत् ।

विदेशीयसत्तात्मकपरिसरे गोखलेमहोदयस्य वादः युक्त एव इति भाति । प्रायः स्वातन्त्र्योत्तरकाले स्वीयसत्तासर्वकारस्य परिसरे, स्पर्धारक्षणनीतिभिः देशस्य सामान्यजनताकल्याणवर्धनाय उपायान्, कार्यक्रमान्, उद्योगव्यवसायांश्च प्रकल्प-यितुं शक्यते इति विश्वासे भवति सति, गोखले महोदयः आत्मनः विचारेषु परिवर्तनं कृत्वा आर्थिकविकासमार्गस्य प्रारम्भदशायां विकासशीलदेशाः योग्यायोग्यनिष्क-र्षपूर्वकं स्पर्धारक्षणनीतीः प्रकल्पयेयुः इति स्पर्धारक्षणनीतिप्रक्रमं प्रायः अन्वमोदीत् इति तर्कयितुं शक्यते ।

* * * *

## सप्तमं प्रकरणम्

# स्वातन्त्र्योत्तरकाले आर्थिकनीतीनां विवृतिः

स्वातन्त्र्योत्तरकाले १९४७ वर्षादारभ्य अद्ययावत् १९९७ वर्षपर्यन्तं, भारतदेशस्य आर्थिकविकासपथः आर्थिकनीतीनां प्रकाराश्च काले काले विभिन्नदिशासु वैविध्यपूर्णगतिभिः परिवर्तयन्तः दृश्यन्ते। एतस्मिन् समये अनेकानां विकसनशास्त्रज्ञानां, राजनीतिज्ञानां, सर्वकारेण नियमितानां तज्ज्ञसमितीनां च विचारधाराणां प्रभावः काले काले दरीदृश्यते। स्थूलदृष्ट्या अवलोकने कृते सति, पञ्चाशद्वर्षाणां समयस्य निम्नलिखितप्रकारेण षड्विभागाः कर्तुं शक्यन्ते (१) १९४६ वर्षादारभ्य १९६० वर्षपर्यन्तं विकासनिदर्शनस्य विभावनदशा (२) १९६१ वर्षादारभ्य १९७१ वर्षपर्यन्तं विकासमार्गदृढीकरणदशा, आयातस्थाने देशीयोत्पादनस्य निवेशनं, निर्यातप्रचोदनं च इति आयातनिग्रहनिर्यातप्रचोदनदशा (३) १९७१ तमवर्षादारभ्य १९७७ तमवर्षपर्यन्तं नीतिविमर्शनदशा (४) १९७८ वर्षादारभ्य १९८८ वर्षपर्यन्तं पण्यप्रभावनियतमार्गस्य स्वेच्छातन्त्रनीतेश्च स्वीकृतिः (५) १९८९ वर्षादारभ्य १९९१ वर्ष पर्यतम् आर्थिकसामाजिकराजकीय रङ्गेषु सङ्कटवेला (६) १९९१ तमवर्षादारभ्य अद्ययावत् नूतनतमस्य उदारनीतिमार्गस्य धैर्येण सम्भारकालः इति। एतासां विविधदशानां विस्तरेण विन्यासः विमर्शनं च अधुना क्रियते।

### विकासनिदर्शनविभावनदशा

भारतदेशस्य स्वातन्त्र्यानन्तरम् आर्थिकविकासं त्वरितगत्या अतिप्रामुख्येन च साधयितुं देशनेतृभिः सङ्कल्पः कृतः। जवाहरलालनेहरूमहाभागस्य विचारधा-

राविमर्शनावसरे, अस्य ग्रन्थस्य प्रथम प्रकरणे लिखितपूर्वमेव यत् विभावनदशाया: मुख्याधिष्ठाता नायक: नेहरूमहोदय: इति । तस्य नेतृत्वे विभावनदशायाम् अनेके नीतिविकल्पा: तज्ज्ञै: विमृष्टा:, भारतदेशस्य आर्थिकराजकीयसामाजिकपरिसरस्य सूक्त: विकासनिदर्शनविकल्प: विभावितश्च । के ते विकासनिदर्शनविकल्पा: आसन्? कथं वा बहुषु विकल्पेषु सत्सु कस्यचित् विकल्पस्य वरणं कृतम्? स्वीकृतविकल्पस्य अल्पकाले दीर्घतमकाले च कीदृशा: लाभा:, कीदृश्य: अनर्थाश्च अवधारिता:? व्यवहारीकृत: विकासनिदर्शनविकल्प: किं नूनमेव सर्वश्रेष्ठ: आसीत्? देशे विकासमार्गेण गच्छति सति, काले काले कथं वा आन्तरिकविमर्श: करणीय: येन मध्येमार्गम् आवश्यकं शोधनं कर्तुं शक्येत? इत्यादय: प्रश्ना: आलोचनीया: भवन्ति ।

विकासनिदर्शनविकल्पा: अनेके आसन् । आयातस्थाने देशीयोत्पादनस्य निवेशनं प्राथम्येन सम्पादनीयम् अथवा निर्यातस्य वृद्धि: प्राथम्येन साधनीया? कृषिरङ्गस्य वेतनीयवस्तूनां च विकास: प्राथम्येन गृहीतव्य: अथवा भूरियन्त्रवस्तूनां उत्पादनं विकासश्च प्राथम्येन व्यवहारीकर्तव्यौ? ग्रामीणरङ्गस्य अभिवृद्धि: पौर-रङ्गस्य अभिवृद्ध्यपेक्षया तीव्रतरगत्या कार्या न वा? उत्पादनव्यवसायेषु लघुव्य-वसायानाम् उत्तेजनं कार्यम् अथवा पृथुव्यवसायानाम् उत्तेजनं कार्यम्? उत्पादनसामग्रीणां स्वाम्यं सम्पूर्णतया सर्वकारे स्थातव्यम् अथवा व्यक्तिस्वाम्यरङ्गे स्थातव्यम्? सर्वोऽपि आर्थिकव्यवसाय: पण्यबलप्रभावनियत: प्रवर्तेत अथवा देशे योजनापद्धत्या उद्योगव्यवसायानां प्राथम्यादे: निर्धार:, प्रचोदनादिकं च साधनीये? विदेशीयमुद्राया: उपार्जनबन्टनादिकं कैन्द्रियधनागारेण नियन्त्रितं स्यात् उत केवलं पण्यबलप्रभावनियतं भवेत्? आयातस्य समीकृतपरिमाणं, विविधवस्तुविधानं च सर्वकारस्य नीतिभि: नियन्त्रिते प्रवर्तेताम् अथवा पण्यबलप्रभावनियते? आयातस्य नियन्त्रणमेव कर्तव्यं चेत् तत् सर्वकारस्य वित्तीयकरसम्बन्धिनीतिभि: साधयितव्यम् अथवा आयातानुज्ञापत्रादिभि:, वास्तविकनिरीक्षणनिर्देशनादिक्रमैश्च सम्पादनी-यम्? तथैव देशे प्रवर्त्स्यमानानाम् उद्योगव्यवसायादीनां वरणविकसनादय: केवलं पण्यबलप्रभावनियता: भवेयु: अथवा सर्वकारस्य व्यवसायानुज्ञापत्रादिभि:

वास्तविकनियन्त्रणक्रमैः नियताः स्युः ? आर्थिकविकासेन साकम् उत्पादितादायस्य बन्टनस्य न्याय्यता अपि कराकरणादिक्रमैः, योजनापद्धतिलब्धोपायैश्च साधयितव्या अथवा बन्टनन्याय्यतामननुलक्ष्य केवलं विकासस्य गतेः क्षिप्रीकरणमेव प्रधानध्येयमिति गृहीतव्यम् ?

एवम् आर्थिकरङ्गस्य निर्वाहविषये नूनं शताधिकविकल्पाः उद्भूताः आसन् । एतादृशानाम् अनेककोटिकानां विकल्पानां लाभानिष्टपरिणामविश्लेषणम् अपि कठिनसाध्यमासीत् यतः तदानीन्तनकाले जगति इतरदेशानां विकासानुभवविषये विशिष्टः ऐतिहासिकपरिचयः आत्मनः पाठग्रहणाय नैव उपलब्धः आसीत् । द्वितीयजागतिकयुद्धानन्तरं राजकीयस्वातन्त्र्यं नूत्नतया प्राप्य आर्थिकविकासमार्गे तदानीमेव पदं दधन्तः एव देशा बहुलाः आसन् । एतेऽपि विकासशीलाः देशाः आत्मनः योग्यतम विकासनिदर्शनं वृणीतुम् अन्धकारे परामृशन्त इव आसन् ।

भारतदेशे १९५१ तमवर्षादारभ्य पञ्चवार्षिकयोजनापद्धतिः प्रारब्धा । १९४८ तम वर्षादारभ्य १९५१ तम वर्षपर्यन्तं देशे स्वातन्त्र्यानन्तरम् उद्भूतानां राजकीयसमस्यानां परिहारार्थं विविधरीत्या प्रयासः कृतः । देशे यानि बहुसङ्ख्यया अबृहत्संस्थानानि आसन्, तेषां समेषां भारतदेशे समीकरणं सरदारपटेलमहोदयस्य नेतृत्वे प्राथम्येन साधितम् । देशस्य भारतपाकिस्तानरूपेण विभजनेन हिन्दूमुस्लीमधर्मीयाणां मध्ये यः कटुद्वेषभावः हिंसकप्रवृत्तिपूर्वकः उद्भावितः तस्य शमनं देशस्य राजकीयस्थिरताप्राप्त्यै आवश्यकमासीत् । एतत्कार्यं देशनेतृभिः प्राधान्येन गृहीतं साधितं च । तदानीमेव पाकिस्तानात् बलात्कारेण हिंसककृत्यैश्च निष्कासिताः असङ्ख्याकाः हिन्दूधर्मीयाः भारतदेशे आगताः वासस्थानवसुधनवृत्तिबान्धवादीनां सम्पूर्णनाशेन परितपन्तः निराश्रिताः आसन् । देशस्य विविधभागेषु, एतेषां निराश्रितजनानाम् आश्रयस्य, वासस्थानस्य, वृत्तेः, विद्यार्जनादेश्च निमित्तं सूक्तव्यवस्थायाः कल्पनम् एका तीव्रतमा समस्या आसीत् । एतस्याः समस्यायाः अपि परिहारः, दृढप्रत्ययेन निरूपितैः कार्यक्रमैः सम्पादितः ।

आर्थिकविकासनिदर्शनस्य रूपणं, तत्सम्बद्धनीतीनां च अभिज्ञानम् इत्यादीनि कार्याणि, १९५१ वर्षादारभ्य प्रथमपञ्चवार्षिकयोजनाकार्यक्रमेण साकं समा-

लोचनपथमासादितानि ।प्रथमपञ्चवार्षिकयोजनालेख्यपत्रे आर्थिकविकासस्य दीर्घकालीनध्येयानाम्, आर्थिकनीतिप्रकाराणां वा स्पष्टत: विस्तारतया च विश्लेषणं निरूपणं वा न कृतम् । भारतदेशस्य कृषिरङ्गप्रधानत्वात् कृषिरङ्गस्य विकास: अवश्यत्वेन स्वीकृत: । विरचितोत्पादनरङ्गस्य आर्थिकसेवारङ्गस्य च विस्तारविकासौ, सर्वेषाम् आर्थिकरङ्गानां परस्परसाङ्गत्यरूपेण विकासश्च, देशस्य प्रतिव्यक्त्यादायस्य वृद्धये अवश्यत्वेन प्रत्यभिज्ञाता: । कृषिरङ्गोपजीविजनानाम् अत्यधिकत्वात् ग्रामीणरङ्गे जनानां प्रतिव्यक्त्यादायस्य अल्पत्वम् अनुभूयते । प्रत्युत विरचितोत्पादनरङ्गस्य विकासार्थम्, आर्थिकसेवारङ्गस्य आनुरूप्येण विस्तारसिद्ध्यै च श्रमिकबलस्य अर्थनं क्रमश: प्रवर्धमानं स्यादिति प्रत्यभिज्ञातम् । अत: कृषिरङ्गग्रामीणरङ्गाभ्यां तत्रस्थ: श्रमिकजनोद्वर्त: क्रमश: पौररङ्गं प्रति विरचितोत्पादनरङ्गं प्रति च स्थानान्तरीकर्तव्य: इति योजनाकार्यक्रमे प्रतिपादित: ।

**आयातनियन्त्रणपद्धतिदशा:**

भारतदेशस्य विकासनिदर्शनं द्वितीयपञ्चवार्षिकयोजनासमयादारभ्य विविधविकल्पानां मध्यात् स्पष्टतया निरूपणं प्राप । मूलत: भौतिकशास्त्रविचक्षणस्यापि, भारतदेशस्य आर्थिकविकासध्येयानां, विकासमार्गस्य च विश्लेषणे अधिगतप्रावीण्यस्य प्राध्यापकमहालनोबिस् महाभागस्य योजनानिदर्शनं न केवलं द्वितीयञ्चवार्षिकयोजनाकार्यक्रमस्य प्रत्युत देशस्य दीर्घकालिकविकासमार्गस्यापि भित्तिमूलायितम् । प्राध्यापक महालनोबिस् महाभागस्य विकासनिदर्शने उपभोगवस्तुरङ्ग: यन्त्रनिर्माणवस्तुरङ्गश्च इति प्राधान्यत: रङ्गद्वयस्य निरूपणं वर्तते । भारतदेशस्य दीर्घकालिकाभिवृद्धये भारवद्यन्त्रवस्तुरङ्गस्य विकास: अवश्यं प्राथम्येन सम्पादनीय: इति बोध: महालनोबिस् महाभागस्य आर्थिकविश्लेषणेन स्फुटं प्रतिपादित: । सारलोहम्, उत्पादनसाधनयन्त्रवस्तूनि, कृषिरङ्गस्य उपभोगवस्तुरङ्गस्य च उपयोगीनि यन्त्रवस्तूनि, वज्रचूर्णं, निर्माणकार्योपयोगीनि यन्त्रवस्तूनि इत्यादीनि भारवद्यन्त्रवस्तुत्वेन परिगण्यन्ते । एतेषां प्राथम्येन उत्पादने कृते सति प्रारम्भे एव मूलधनस्य, विदेशीयमुद्राणां च भूरितरप्रमाणेन आवश्यकता सम्भवतीत्यपि महालनोबिस् विकासनिदर्शनेन अवगतमासीत् । भारतदेश: अचिरादेव समग्रजगत:

विकासशीलदेशानां मध्ये आर्थिकबलानुगुण्येन पुरोगामी भूयात्, विशिष्टाम् आत्मनिर्भरतां च प्राप्नुयात् इति तदानीन्तनप्रधानमन्त्रिणः नेहरूमहोदयस्य मनसि स्वप्नदर्शनमासीत् । नेहरूमहोदयः महालनोबिस् महाभागस्य विकासदृष्टिम् अनुमोद्य भारवद्यंवस्तुप्रधानां विकासनीतिं स्वीचकार ।

द्वितीयपञ्चवार्षिकयोजनाकालस्य प्रारम्भवर्षे एव—१९५६ तमे वर्षे-भारतदेशे विदेशीयमुद्रायाः सङ्कटकालिकपरिस्थितिः अधिगता । आयाते झटिति अतिभूरिप्रमाणतां ग्रहीष्यमाणे सति, आयातनिर्यातसम्बद्धनीतीनां विदेशीयमुद्रानिर्वाहनीतीनां च विषये महत् परिवर्तनम् उपस्थापितम् । आयातप्रमाणस्य नियमनम् अत्यवश्यमिति उद्बुद्ध्य प्रमाणनियन्त्रणनीतिः स्वीकृता । प्रत्येकम् आयातकारिणः आत्यात्यमानवस्तूनां नामनिर्देशनम्, आयातप्रमाणस्य प्राक्कथनं च विधाय, सर्वकारात् अनुमतिपत्रम् प्राप्यैव आयातं कर्तु प्रभवेयुः इत्यात्मकः निर्बनधः नियन्त्रणनीतेः मुख्यस्वरूपः अभवत् । इमाम् आयातनियन्त्रणानुमतिनीतिं व्यवहारीकर्तुम् आयातनिर्यातनियन्त्रणकार्यालयं स्थापितम्, अनेकेषां पदाधिकरिणां नियुक्तिश्च कृता । आयातनिर्यातनियन्त्रणमुख्याधिकारिकार्यालयं दिल्लीनगर्याम् उद्योगव्यापारमन्त्रालयस्य शाखारूपेण उपस्थापितम् । तथा च उपमुख्याधिकारिकार्यालयानि मुंबई, कलकत्ता मद्रासादिनगरेषु स्थापितानि । क्रमशः आयातनियन्त्रणोपक्रमस्य विधानम् अधिकतया जटिलं सत् प्रावर्धत । कीदृशानां वस्तूनाम् आयातस्य अनुमतिः देया इति विषये निर्णयम् कर्तुम्, 'आन्तरिकोत्पादनेन परिपूरणं न शक्यमिति' तथा च निर्दिष्टवस्तूनाम् उत्पादनप्रक्रमे 'अस्य आयातीयवस्तुनः आवश्यकता वर्तते' इति च प्रमाणीकर्तुम् अनेकानि कार्यालयानि स्थापितानि । यन्त्रशास्त्राभिवृद्धिमुख्यानुशासककार्यालयं स्थापितः, तत्र च अनेकतज्ज्ञाधिकारिणां नियुक्तिः कृता । एवम् आयातसम्बद्धनीतेः द्वौ उद्देशौ भावितौ । आयातीयवस्तूनाम् आन्तरिकोत्पादनस्य प्रचोदनं तथा च आयातप्रमाणस्य उपलब्धविदेशीयमुद्राप्रमाणानुगुण्येन नियन्त्रणम् इति । उभावपि उद्देशौ आयातकरनिक्षेपपरीपाट्या साधयितुं शक्यौ आस्ताम् । तथापि आयातकरनिक्षेपनीतिविकल्पं परित्यज्य आयातस्य साक्षान्नियन्त्रणनीतिरूपविकल्पः १९५६ तमवर्षादारभ्य निष्ठुरं प्रतिगृहीतः व्यवहारीकृतश्च ।

आयातस्थाने आन्तरिकोत्पादनस्य प्रतिनिवेशनं प्राधान्यतः आयातनिर्यात-नीतिप्रकारस्य मुख्योद्देशः समभूत्। आयातनियन्त्रणोद्देशस्य प्राधान्यत्वात् निर्यात विस्तारोद्देशः उपेक्षितः इव अभवत्। परं तृतीयपञ्चवार्षिकयोजनायाः प्रारम्भे १९६२ तमे वर्षे निर्यातविस्तारः उद्देशत्वेन योजनालेख्यपत्रे स्पष्टतया विनिवेशितः। परन्तु नियन्त्रितायातपरिसरे उत्पादितवस्तूनां निर्यातविस्तारः कष्टसाध्यः अभवत्। आन्तरिकोत्पादनानाम् अधिकमूल्यत्वात् निर्यातार्थम् उत्पादितानां वस्तूनामपि मूल्यम् अत्यधिकं भूत्वा अन्तर्देशीयपण्यस्थाने मूल्यस्पर्धायां भारतीयवस्तूनां तुलनार्होत्कर्षः नैव प्राप्तुं शक्यः आसीत्। निर्यातप्रचोदनार्थं धनरूपपरिदानं, गृहीतकरप्रतिनिवर्तनम् इत्यादयः क्रमाः प्रारब्धाः आसन्। एते क्रमाः अपि निर्यातीयवस्तुभ्यः सम्यक्तया तुलनाबद्धोत्कर्षं प्रापयितुं न अशक्नुवन्। विदेशीयमुद्रामूल्यस्य आयातनिर्यातसमतोलनानर्हत्वात्, रूप्यकस्य निजीयसत्वनियमितार्घादपि अतिशयितार्घत्वात् आयातनिर्यातसमतोलतां प्रति प्रवृत्तिरपि अवरुद्धा इव आसीत्।

आयातनियन्त्रणेन आन्तरिकोत्पादनव्यवसायस्य बाह्यजगतः प्रचोदितस्पर्धायाः बाढं संरक्षणं प्रापितं किल। अनेन आन्तरिकोत्पादनव्यवसाये रतैः उद्योगपतिभिः आत्मनः कार्यसिद्धिक्षमतां प्रवर्धयितुं कोऽपि निर्बन्धः नैव विभावितः। एतत् सर्वमनुलक्ष्य १९६६ तमे वर्षे आयातनिर्यातनीतिप्रकारे किञ्चित् परिवर्तनं प्रकल्पितम्। रूप्यकस्य विदेशीयमुद्रायां परिगणिते मूल्ये विघटनं परिकल्पितम्। प्रतिडॉलरस्य (अमेरिकादेशस्य मुद्रायाः) रूप्यकेषु मूल्यं पञ्चरूप्यकाणि आसीत्। मूल्यविघटननीतेः उद्घोषेण प्रतिडॉलरस्य मूल्यं सप्तरूप्यकाणि अभवत्। एतादृशमूल्यविघटनक्रमेण आयातवस्तूनाम् अर्घः रूप्यकेषु निरूपितः वृद्धिं गतः। अनेन आयातीयवस्तूनाम् अर्थनं विघटितम्। तथा च इदमपि प्रत्याशितं यत् निर्यातीयवस्तूनां मूल्यं डॉलरमुद्रायां निरूपितं विघटेत येन निर्यातीयवस्तूनाम् अर्थनम् अन्ताष्ट्रियपण्यस्थाने वृद्धिं गच्छेदिति। प्रायः मुद्रामूल्यविघटनक्रमस्य आयातनिर्यातसम्बद्धः अयं परिणामः विदेशव्यापारसिद्धान्तरीत्या तर्कितव्यः। परन्तु निरीक्षितपरिणामाः नैवोपलब्धाः। अत्र अनेकानि कारणानि आसन्। प्रथमतः मुद्रामूल्यविघटनसमये एव देशे अतितीव्रवृष्ट्यभावघटना दुर्दैववशात् सम्प्रवृत्ता

येन समग्रकृषिरङ्गः सङ्कुचितताभावम् अनुबभूव । देशे भूयिष्ठभागस्य कृषिव्यवसायालम्बनात् विरचितोत्पादनरङ्गेऽपि सङ्कोचः अपरिहार्य इव अभवत् । अनेन निर्यातीयवस्तूनाम् उत्पादनप्रमाणेऽपि सङ्कोचे सञ्जाते निर्यातविक्रयव्यवसायोऽपि अवरुद्ध इव अभवत् । अन्ततः मुद्रामूल्यविघटनक्रमस्य निर्दिष्टाः परिणामाः देशस्य लाभाय नैव सम्पादिताः इति हन्त ।

## निर्यातप्रचोदनस्य अङ्गीकरणम्

१९६६ तमवर्षदारभ्य १९७१ तमवर्षपर्यन्तम् आयातनियन्त्रणं, निर्यातप्रचोदनम् इति उभावपि नीतिप्रकल्पौ प्रायः समानप्राधान्येन निर्वाहितौ । आयातनियन्त्रणस्य निष्ठुरनिर्बन्धः नैव शैथिल्यं प्राप, प्रत्युत निर्यातप्रचोदनकार्ये तत्कालं यावत् बहुव्यापकता नैव प्राप्ता आसीत् । निर्यातविस्तारस्य साधनार्थं निर्यातव्यवसायस्य बहुमुखीनः अवगमः अवश्यकः खलु । कीदृशानि वस्तूनि निर्यातपण्ये अर्थ्यन्ते । निर्यातव्यापारव्यवसाये के के व्यवहाराः, कानि कानि विधानानि कार्यपथमानेतव्यानि ? उत्पादनक्रमस्य निबम्धनं कथम् आधुनिकत्वेन परिवर्तितव्यम् । निर्यातव्यवसायस्य प्रवाहतः अविच्छिन्नं प्रसञ्जनार्थं के के उपक्रमाः व्यवहारीकर्तव्याः । एतादृशानां विविधानां प्रश्नानां विश्लेषणार्थं, सूक्तोपायशोधनार्थं च निर्यातविषयकबोधनसेवासौकर्यार्थं च तज्ज्ञजननिर्वोढसंस्थानाम् आवश्यकता सर्वकारेण विभाविता । अत एव १९६९ वर्षादारभ्य अनेकाः निर्यातबोधनसेवासंस्थाः प्रतिष्ठापिताः । व्यापारविकासप्राधिकरणं, निर्यातप्रचोदनसंसदः, निर्यातऋणधनसन्दानसंस्थाः, भारतीयव्यापारप्रशिक्षणसंस्था इत्याद्याः संस्थाः सप्ततिदशकस्य प्रथमभागे संस्थापिताः अचिरादेव प्रवृद्धिमपि प्रापिताः । आर्थिकविकासनिदर्शने अभूतपूर्वतया निर्यातप्रवृत्तिप्राधान्यं विनिवेशितम् ।

## आयातनिर्यातनीतिविमर्शनम्

१९७१ वर्षादारभ्य १९७८ वर्षपर्यन्तं गते समये, भारतदेशस्य आयातनिर्यातनीतिषु परिवर्तनस्य आवश्यकतामुद्दिश्य, नीतिकारेषु अर्थशास्त्रज्ञेषु नूतना प्रतिपत्तिः सञ्जायमाना आसीत् । 'आयातसम्बद्धाः नियन्त्रणक्रमाः देशस्य

उत्पादनव्यवसायस्य अर्घं प्रवर्धयन्ति । आन्तरिकोत्पादनव्यवसायस्य अतिशयितं बाह्यस्पर्धाया:संरक्षितत्वात् कार्यसिद्धिक्षमता विशेषेण विघट्यमाना वर्तते' । इत्यादिप्रकारेण उद्बोधिता प्रतिपत्ति: आयातनिर्यातनीतिषु परिवर्तनं साधयितुं प्रणोदनमजनयत् । १९७७ तमे वर्षे विशेषाधिकारिभि: विदेशव्यापारतज्ज्ञैश्च सदस्यत्वेन सम्पन्ना, विदेशव्यापारमन्त्रालयस्य मुख्यसचिवेन डॉ. पि. सि. अलेक्साण्डरमहोदयेन अध्यक्षीकृता आयातनिर्यातसन्बद्धनीतिविमर्शनसमिति: सर्वकारेण नियुक्ता आसीत् । अस्या: समिते: कार्यनिर्वाहकसचिवपदे डॉ. वि. आर. पंचमुखी महोदय: नियुक्त: यस्य कार्यभारे समस्यानां सांख्यिकविश्लेषणम्, अनुशासनप्रबन्धस्य लेखनम् इत्यादीनि कार्याणि विनिवेशितानि । इयं समिति: आत्मन: अन्तिमप्रबम्धे आयातनिर्यातसङ्ख्यानां, तन्मूलभूतसिद्धान्तस्य, आयातनिर्यातव्यवसाये रतानाम् उद्योगपतीनाम् अभिप्रायस्य, तथा च तज्ञानां नीतिरचयितृणां च मतस्य गहनं विश्लेषणं विधाय, आयातनिर्यातनीतीनां परिवर्तनार्थं, तत्र इच्छितोद्देशानुरूप्यं प्रापयितुं च विविधानि अनुशासनानि प्रतिपादयामास । १९७८ तम वर्षादारभ्य रचिते आयातनिर्यातनीतिपत्रे, अनया समित्या अनुशासिता: बहव: क्रमा: व्यवहारीक्रणार्थं विनिवेशिता: । एतत्समिते: अनुशासनानां संक्षेपेण निर्देश: विशेषोद्बोधजनक इति मत्वा अत्र निवेद्यते ।

प्रथमत: आयातनियन्त्रणनीतिषु महत् मूलरूपं परिवर्तनम् अनुशासितम् । प्रतिवर्षं विदेशव्यापारमन्त्रालयमन्त्रिणा उद्घोष्यमाणे नीतिपत्रे आयातीयवस्तूनां द्विविधा पट्टिका निवेदनीया । प्रथमायां, तेषां वस्तूनां निर्देश: करणीय: येषाम् आयात: मन्त्रालयस्य अनुमतिपत्रेण साध्य: भवेत् । द्वितीयायां पट्टिकायाम् आयातार्थं विशेषापवादपरिस्थितिं विहाय अन्यदा सामान्यत: प्रतिषिद्धानां वस्तूनां निर्देश: कार्य: । उभयो: पट्टिकयो: अनिर्दिष्टानि वस्तूनि मन्त्रालयस्य अनुमतिपत्रादिविधानाद् ऋते एव सर्वसामान्यमुक्तानुमतिकक्षायां परिगणनीयानि । आयातस्य साक्षात् नियन्त्रणं क्रमश: शिथिलीकार्यम् । देशस्य आर्थिकविकासानुकूल्यार्थं आयातीयवस्तूनाम् आवश्यकता वर्तते इति अवगन्तव्यम् ।

आन्तरिकोत्पादनव्यवसायस्य बाह्यस्पर्धायाः संरक्षणम् आयातकरनिक्षेपक्रमेण साधयितव्यं न तु आयातस्य साक्षान्नियन्त्रणक्रमेण, आयातानुमतिपत्रनीत्या वा। साक्षान्नियन्त्रणक्रमात् आयातकरनिक्षेपक्रमं प्रति गमनं क्रमशः साधयितव्यम्। प्रथमतः तादृशः आयातकरक्रमः वरणीयः येन पूर्वं साक्षान्नियन्त्रणक्रमात् आन्तरिकोत्पादनव्यवसायस्य प्राप्यमानं संरक्षणन् अधुनाऽपि निश्चितं स्यात्। अयं नियन्त्रणपरिणामतुल्यपरिणामः आयातकरक्रमः इति कथयितुं शक्यते। एतादृशायातकरक्रमे आयातकरपरिमाणानि बहुभ्यः वस्तुभ्यः अत्यन्तं बृहन्ति भवेयुः। तावन्तः भूरिपरिमाणकराः निक्षेपणार्हाः न भवन्ति। अतः प्रारम्भदशायामेव नियन्त्रणपरिणामतुल्यपरिणामेभ्यः आयातकरेभ्यः किंचित् न्यूनमात्रापरिमिताः कराः निक्षेप्तव्याः भवेयुः। एतादृशकरक्रमं द्वित्रवर्षाणि प्रचाल्य, तदनन्तरम् आयातकराणां परिमाणानि भूरिप्रमाणेन विघटितव्यानि येन देशीयोत्पादनव्यवसायः अधिकतरं विदेशीयोत्पादनव्यवसायपतिभ्यः स्पर्धानिबद्धः भूत्वा, तदनु आत्मनः उत्पादकतां वर्धयित्वा, स्पर्धात्मकपरिसरे तुलनात्मकपुरोगामित्वं साधयितुं प्रभवेत्। विदेशीयव्यापारविषयकप्रमेये तु एवं प्रतिपाद्यते यत् आयातवस्तुभ्यः निक्षिप्यमाणाः सर्वेऽपि आयातकराः समानपरिमाणाः, अल्पपरिमाणाश्चस्युः येन सर्वे उत्पादनव्यवसायाः समानरीत्या, अल्पमात्रया च विदेशस्पर्धात्मकसङ्घर्षात् संरक्षिताः भवेयुः। अधिकसंरक्षणं देशीयोत्पादनव्यवसायस्य उत्पादकताभिवृद्धये, देशीयविभवस्य उत्तमोत्तमरीत्या उपयोगप्रवृत्तिप्रणोदनाय च नैव समर्पकम् इत्यपि सैद्धान्तिकविचारः वर्तते। तदनुसारेण आयातकाराणां क्रमशः विघटनम् आवश्यकमेव स्यात्।

विभिन्नव्यवसायेभ्यः निक्षिप्तानाम् आयातकाराणां समानतायाः उद्देशः वैयक्तिकविचारनिरूपितपक्षपातावकाशस्य निवारणम् विधाय, सकलानां व्यवसायानां समानसंरक्षणस्य साधनम्। परन्तु अस्मिन् विषये अनेके सैद्धान्तिकविचाराः विवक्षिताः वर्तन्ते। साक्षान्नियन्त्रणपद्धतिः वैयक्तिकविचारप्रभावितपक्षपातताप्रवृत्त्या कलुषिता भवति। साक्षान्नियन्त्रणक्रमेण विभवस्य उत्तमोत्तमरीत्या विविधरङ्गेषु बंटनं नैव भवति। प्रत्युत आयातकरक्रमेण पण्यबलप्रभावः प्रधानतया

प्रवर्तमानः सन् विभवोपयोगस्य उत्तमोत्तमतां निश्चाययति । तथा च नियन्त्रणपद्धतेः व्यवहारीकरणार्थं विविधसंस्थानां स्थापनम् अवश्यं भवति । नियन्त्रणपद्धतेः परिवर्तनं सुलभतया साधयितुं नैव साध्यं भवेत् । आयातकरक्रमे तु परिवर्तनम् आयातकाराणां प्रमाणानां नूतनतया घोषणेन सरलतया साधयितुं शक्यते । एतादृशकारणैः आयातकरक्रमः साक्षान्नियन्त्रणपद्धतेः गरीयान् इति निश्चिता मतिः सिद्धान्तविचक्षणानाम् ।

साक्षान्नियन्त्रणक्रमस्य स्थाने पूर्णतया आयातकरनिक्षेपक्रमस्य निवेशनं नैव शक्यं भवेत् । नैव उचितमपि । विकासमार्गे प्रवृत्ते देशे कतिपयोत्पादनरङ्गाणां विदेशीयस्पर्धासङ्घर्षात् संरक्षणम् अवश्यमेव सन्तिष्ठति । अतः साक्षान्नियन्त्रणक्रमेण साकम् आयातकरनिक्षेपणक्रमस्य संमिश्रणम् अवश्यं भवति । कथं वा उभयोः क्रमयोः मिश्रणं कार्यं, कीदृशेभ्यः वस्तुभ्यः साक्षान्नियन्त्रणक्रमः गरीयान्, केभ्यः वस्तुभ्यः केवलम् आयातकरक्रमः प्रयोक्तव्यः, तथा च कानि कानि वस्तूनि उभयोरपि क्रमयोः विषयानि भवितव्यानि इत्यादिप्रश्नानधिकृत्य विश्लेषणपूर्वकं नीतिविषयकनिर्धाराः नीतिकारैः तत्तत्कालीनार्थिकपरिस्थितिम् अनुलक्ष्य गृहीतव्याः । विविधानां विकासशीलदेशानाम् आर्थिकनीतिवैविध्यस्य विश्लेषणेन इदमवगतं भवति यत् कस्यचिदपि देशस्य कृते सर्वसाधारणनीतिनिदर्शनं नैव अनुशासितुं शक्यते इति । अलेक्सांडर तज्ज्ञसमित्या एवम् उभयोः क्रमयोः मिश्रणमेव अनुशासितम् ।

निर्यातस्य उत्तेजनार्थं प्रयुज्यमानानां नीतीनां तर्कबद्धव्यवस्थायाः स्थापनार्थम् अनया समित्या अनेके नूतनाः विचाराः प्रतिपादिताः । निर्यातोत्तेजकधनरूपिसाहाय्येन निर्यातस्य अभिवृद्धिः अवश्यं समभूत् इति निर्याताङ्कानाम् एतिहासिकविश्लेषणेन व्यवस्थापितम् । परन्तु निर्यातोत्तेजकसाहाय्यस्य च निर्यातवस्तुभ्यः बहुकालं प्रस्तुतिः नैव समीचीना इत्यपि अत्र बहुभिः युक्तियुक्तवाक्चयैः प्रतिपादितम् । धनसाहाय्ये निश्चिततया बहुकालं यावत् दीयमाने सति निर्यातवस्तूत्पादनरतैः उद्योगपतिभिः आत्मनः व्यवसायस्य उत्पादकताभिवृद्धिं साधयितुं तीव्रप्रचोदनमेव न स्यात् । अतः निर्यातोत्तेजकधनसाहाय्यं कालसीमानियतं सत्

प्रणोदनार्थं यावदावश्यकं तावत्परिमाणमेव भवेत् इति प्रमेयविमर्शनेन सिद्ध्यति। तज्ज्ञसमित्या अस्मिन् विषये अधोलिखिताः निर्धारनिकषाः निर्दिष्टाः।

निर्यातोत्तेजकधनसाहाय्यं त्रीन् विषयाननुलक्ष्य प्रदातव्यम्। प्रथमः, अनेकानि निर्यातीयवस्तूनि नूत्नतया निर्यातार्हतां प्राप्नुवन्ति, प्रारम्भकाले उत्तेजकसाहाय्यम् अपेक्षन्ते। कानि च पुनः नूत्नपण्यस्थाने अंशतः एव प्रवेशं प्राप्य पण्यार्हताविकसनार्थम् उद्घोषणपत्रिकाप्रचारादिकार्यक्रमाणाम् आवश्यकत्वात्, एतादृशकार्यक्रमाणां प्रभूतधनव्ययिकत्वात् च उत्तेजकधनसाहाय्यम् अपेक्षन्ते। एवं निर्यातवस्तुपेटके नूतनतया निविष्टानां प्रभूतनिर्यातसम्भाव्यतासम्पन्नानां वस्तूनांकृते, तथा च नूतनपण्यस्थाने प्रथमं प्रविष्टानां प्रभूततया पण्यावकाशसंभाव्यतासंपन्नानां वस्तूनां च कृते उत्तेजकधनसाहाय्यं दातव्यमिति निकषः। एतादृशनिमित्तकं धनसाहाय्यं स्पष्टतया नियमितकालावधिनियतमेव न्याय्यं स्यात् यतः कतिपयकालानन्तरं निर्यातवस्तूनां पण्यावकाशस्य वा नूतनत्वं नैव तिष्ठेत्। तथा च एतत् धनसाहाय्यं तावत्परिमाणकं भवेत् यावता नूतनत्वनिमित्तम् आपन्नं तुलनात्मकाकर्षकत्वस्य विघटनं प्रतिहतं भवेत्। साहाय्यपरिमाणस्य कालावधेश्च निर्धारः प्रत्येकं निर्यातीयतायाः विश्लेषणेन कार्यः।

निर्यातीयवस्तूनि देशीयान्तरिकोत्पादनकरादिभिः विविधैः भूरिपरिमाणैः करैः प्रहतानि तुलनात्मकाकर्षकत्वगुणेन परिहीनानि भवन्ति। एतादृशं देशीयकरादानप्रचोदितं निर्यातीयताविघटकां दशां परिवर्तयितुं निर्यातोत्तेजकधनसाहाय्यम् अवश्यं भवेत्। करप्रतिवर्तननीतिप्रकारेण यावत् करप्रतिवर्तनं निर्दिष्टं भवति तावतः परिमाणादुपरि यः करभारः अवशिष्टः भवति तावत्परिमाणं साहाय्यं साक्षाद्धनदानरूपेण कर्तव्यमिति द्वितीयः निकर्षः।

भारतनिर्यातीयवस्तूनि आत्मनां तरपण्यं स्पर्धाकर्तृणां विदेशीयनिर्यातवस्तूनां तरपण्यापेक्षया प्रभूततरं सत् तुलनात्मकाकर्षकत्वगुणात् प्रमुषितानि भवेयुः। एतन्निमित्तं निर्यातीयवस्तूनां धनसाहाय्यस्य आवश्यकता विभाव्यते। तरपण्यतोलनप्रचोदितः अयं तृतीयः निकर्षः।

तज्ज्ञसमितेः अनुशासनानां मुख्योद्देशः निर्यातव्यवसायस्य मौलिकबलस्य प्रवर्धनम् आसीत् येन कतिपयकालावधेः पश्चात् निर्यातीयतायां तुलनात्मकोत्कर्षः धनसाहाय्यं विनैव स्वीयबलेन सम्पद्येत ।

तज्ज्ञसमितिः आयातनिर्यातसम्बद्धान् इतरननेकविषयानधिकृत्यापि गाढं विश्लेषणं विधाय आयातनिर्यातनीतिक्रमे परिवर्तनं साधयितुम् अनेकानि अनुशासनानि प्रशशंस । तज्ज्ञसमितेः कथनं सर्वकारेण १९७८ तमे वर्षे एव स्वीकृत्य व्यवहारीकृतम् । तदानीं देशस्य विदेशीयमुद्रासग्रहः प्रभूतः आसीत् । कृषिरङ्गस्य निर्वर्तनमपि अत्यन्तं समाधानकरमासीत् । आयातनिर्यातनीतिप्रक्रमस्य शोधनार्थम् अत्यन्तं समीचीनः अवसरः आसीत् । नीतिक्रमस्य शोधनं तु प्रारब्धम् । परन्तु आयातस्य साक्षान्नियन्त्रणक्रमस्य शिथिलीकरणं, सरलीकरणं वा विशेषतया नैव साधितम् ।

अलेक्साण्डराध्यक्षीयतज्ज्ञसमितेः पश्चात्, प्रकाशटण्डन् अध्यक्षीया तज्ज्ञसमितिः, तदनु अबिद्हुसेन् समितिः इत्याद्याः समितयः आयातनिर्यातव्यवसायस्य विविधान् विभागान् अधिकृत्य शोधनार्थं अनुशासनानि रचयामासुः । परन्तु आयातनिर्यातनीतिक्रमः विशेषतया परिवर्तनं नैव प्राप । आयातस्य साक्षान्नियन्त्रणार्थं परिकल्पितः अनुमतिपत्रक्रमः, आयातनिर्यातनियन्त्रणकार्यालयस्य स्वेच्छया नियन्त्रणनीतिवरणं, व्यवहारीकरणम् इत्यादयः क्रमाः प्रचलिताः एव यथापूर्वम् ।

**उदारीकरणस्य प्रारम्भः**

१९७८ तमवर्षादारभ्य १९९० तमवर्षपर्यतं नीतिक्रमस्य परिशोधनस्य प्रयासः मन्दगत्याऽपि निरन्तरं प्राचलत् । परंतु १९९०-९१ तमे वर्षे देशस्य आर्थिक परिस्थितिः अत्यन्तं सङ्कटदशामाप । देशस्य विदेशमुद्रासञ्चयः भयावहरीत्या अतिशयितहीनायपरिमाणतां समासाद्य अन्ताराष्ट्रियपरिसरे ऋणयोग्यतानिर्णायकसंस्थानां प्रकल्पने भारतदेशस्य स्थानं नीचतमकोटिम् उपागच्छत् । भारतदेशः आत्मनः पूर्वं स्वीकृतस्य ऋणस्य प्रतिदानस्य वार्षिकभागम् अपि प्रदातुं नैव प्रभवेत् इत्यात्मकः संशयसम्प्लुष्टः लोकवादः प्रसृतः यः देशस्य कृते दीर्घकाले हानिकारकः

विषयः आसीत् । विदेशीयऋणभारस्य अतिशयिततां सहचरीकुर्वन् सर्वकारस्य अन्तर्देशीयऋणभारोऽपि देशस्य आर्थिकसमतोलतासिद्ध्यै, सर्वतोमुखस्थायित्वेन साकम् अभिवृद्धिप्राप्त्यै च तीव्रविघटकः सङ्गतः आसीत् । सर्वकारोऽपि बहुजनानां प्रियकारिनीतीः व्यवहारीकुर्वन् सकलम् अर्थशास्त्रविहितं शासनम् उपेक्षयामास । अनेन सर्वत्र आर्थिकानवस्था पदं न्यदधत् । सर्वकारस्य विश्वासार्हता एव संशयापन्ना समभवत् । सर्ववस्तूनां मौल्याभिवृद्धिगतिः अतीव तीव्रा भूत्वा देशस्य आर्थिकपरिस्थितेः समतोलता विच्छिन्ना समभवत् । आर्थिकस्थितेः अभद्रता सामाजिकराजकीयरङ्गेष्वपि महत्सम्प्लवस्य प्रचोदने कारणा भविष्यति इति भीतिः नीतिकाराणां मनसि समजनि । विना विलम्बं सूक्तनीतिक्रमस्य विभावनं व्यवहारीकरणं च अतीव अवश्यमासीत् ।

१९९०-९१ तमे वर्षे सार्वजनिकनिर्वाचनानन्तरं नूतनसर्वकारः आर्थिकनीतिक्रमे प्रभूतं परिवर्तनं योजयामास । अस्मिन् समये सर्वकारस्य अर्थमन्त्रिपदम् अलङ्कुर्वाणः, प्रसिद्धार्थशास्त्रज्ञः डॉ० मनमोहनसिंहमहाभागः नीतिपिरिवर्तनस्य आर्थिकोदारीकरणस्य च अध्वर्युत्वं समदीधरत् । आर्थिकनीतिपरिवर्तने आयव्ययसमतोलताप्राप्तिः प्राथमिकः उद्देशः आसीत् । मौल्याभिवृद्धिगतेः शीघ्रतां वारयित्वा मौल्याभिवृद्धिगतिं मन्थरयितुं विशेषप्रयासः आवश्यकः आसीत् । रूप्यकस्य विदेशीयमुद्रायां मौल्यं तथा परिवर्ततव्यमासीत् येन विनिमयार्धः रूप्यकस्य वास्तविकं मूल्यं व्यञ्जयेत् ।

प्रथमतः रूप्यकस्य विदेशीयमुद्राविनिमयार्घः विघटितः येन प्रत्येकं डॉलरस्य मौल्यं रूप्यकेषु वृद्धिं गतम् । प्रत्येकं डॉलरस्य विनिमयेन अधिकरूप्यकाणाम् अर्जनं भवेदिति निमित्तं निर्यातस्य विशेषतया अभिवृद्धिः सम्भाव्या । आयातस्य च रूप्यकेषु निरूपितं मूल्यं सस्प्रवृद्धं स्यात् येन आयातस्य विघनटमेव सम्प्रचोदितं स्यात् । निर्यातस्य वृद्धिप्रणोदनम् आयातस्य विघटनप्रणोदनम् इति परिणामद्वयं प्रायः विनिमयार्घस्य परिवर्तनेन अपेक्षितं भवेत् । एतौ परिणामौ अनेकान् अन्यान् परिणामान् अवलम्बेते । विनिमयार्घस्य विघटनेन निर्यातीयवस्तूनां डॉलरनिरूपितं मूल्यं विघटितव्यम् आयातीयवस्तूनां मूल्यं च वर्धितव्यम् । तदनु तादृशनिर्या-

तीयवस्तूनां निर्यातः प्रवर्धेत एषाम् अन्योन्यान्वितमूल्यनिरूपितार्थनविकासशीलता प्रचुरा भवेत् । भारतदेशस्य अनेकानां निर्यातीयवस्तूनाम् अन्योन्यान्वितमूल्यनिरूपितार्थनविकास शीलता प्रायः अल्पा वर्तते इति शास्त्रज्ञानाम् अभिप्रायः । अनेन निर्यातस्य अधिकतया वृद्धिः नैव सम्पादयितुं शक्यते । अधुनातनस्यापि आर्थिकनीतिपरिवर्तनस्य एतादृशः परिणामः सम्भावितः आसीत् ।

भारतदेशे आयातनियन्त्रणं साक्षान्नियन्त्रणपद्धत्याम् आयातानुमतिपत्रप्रणाल्या क्रियमाणमासीदिति इतः पूर्वं विस्तारेण निरूपितं किल । अधुना आर्थिकनीतीनां महत्परिवर्तनस्य अङ्गतया साक्षान्नियन्त्रणपद्धतिः प्रायः पूर्णतया परित्यक्ता । आयातीयवस्तूनां स्थाने आन्तरिकोत्पादनवस्तूनां संनिवेशनस्य प्रचोदनार्थं बाह्यस्पर्धाभ्यः आन्तरिकोत्पादनक्रमस्य यावती रक्षा आवश्यकी इति कल्प्यते तावती रक्षा आयातकरप्रणाल्या प्रदेया इति प्रमेयमनुसृत्य आयातकरप्रणाल्याः संशोधनमपि उपक्रान्तम् । भारतदेशस्य आयातकराणां मात्राः अत्यधिकाः वर्तन्ते । जगति अन्यविकासशीलदेशेषु आयातकराणां मात्राः एतावदधिकाः न विद्यन्ते । आन्तरिकोत्पादनरङ्गस्य बाह्यजगतः निपुणतरात् उत्पादनक्रमात् स्पर्धा वर्धितव्या इति प्रकल्प्य आयातकराणाम् अत्यधिकप्रमाणेन विघटनम्, आयातकरप्रणाल्याः तदन्तर्गतसांस्थिकव्यवस्थायाश्च विशेषरीत्या संशोधनम्, आयातनिर्यातविधानानां सुगमीकरणम् इत्यादयः नूतनक्रमाः विभाविताः व्यवहारीकृताश्च । निर्यातोत्तेजनार्थम् इतः पूर्वं प्रदीयमानं धनरूपिसाहाय्यं रूप्यकस्य विनिमयार्घस्य विघटनानन्तरम् अनवश्यकम् इति प्रकल्प्य धनरूपिसाहाय्यस्य पद्धतिरेव प्रायः पूर्णतया परित्यक्ता ।

उत्पादनव्यवसायानां नूतनतया स्थापनार्थम् अथवा प्रतिष्ठितानां व्यवसायानां विस्तारीकरणार्थं सर्वकारस्य अनुमतिपत्रस्य आवश्यकता आसीत् । नीतिपरिवर्तनाङ्गतया उत्पादनव्यवसायनिमित्तकानुमतिपत्रपद्धतिः शिथिलीकृता । देशे आर्थिकरङ्गे एकाधिकारव्यवसायप्रवृत्तेः दमनार्थम्, अन्याय्यव्यापारनीतिव्यवहाराणां नियन्त्रणार्थं च सर्वकारीया नियन्त्रणसंस्था कार्यप्रवृत्ता आसीत् किल । अस्याः संस्थायाः शासनविधानक्षेत्रम् अर्थनीतिपरिवर्तनाङ्गतया प्राचुर्येण लघूकृतम् । अनेन

उद्योगव्यवसायानां परिमाणस्थूलीकरणे प्रवृत्तिः उत्तेजिता भवेत्, उत्पादितवस्तूनां प्रत्येकम् उत्पादनव्ययस्य विघटनं भवेत् येन तादृशवस्तूनां निर्यातस्पर्धापुरोवर्तिता प्रवर्धेत, इत्यादयः परिणामाः प्रत्याशिताः वर्तन्ते ।

**धनागारव्यवस्थायाः शोधनम्**

देशस्य धनागारव्यवस्थायाः सर्वकारस्य कराकरणायव्ययपद्धतेश्च विशेषतया परिवर्तनमपि आयोजितम् । धनागारव्यवस्थायां परिवर्तनक्रमाणां विश्लेषणपूर्वकसूचनार्थं, एम् नरसिंहन् नामकतज्ज्ञश्रेष्ठस्य आध्यक्ष्ये तज्ज्ञसमितिरेका नियोजिता । तथैव कराकरणायव्ययव्यवहाराणां तत्सम्बद्धनीतीनां च परिवर्तनार्थं सूचनाः संशोध्य प्रतिपादयितुं डॉ राजा चेल्लय्यानामकस्य सुप्रसिद्धतज्ज्ञस्य आध्यक्ष्ये तज्ज्ञसमितिः नियोजिता । नरसिंहन् महाभागस्य तज्ज्ञसमितेः, चेल्लय्यातज्ज्ञसमितेश्च तत्तत्सम्बन्धिरङ्गेषु प्रतिपादितानि अनुशासनानि प्रायः सर्वशः सर्वकारेण स्वीकृतानि ।

धनागारव्यवस्थायाः परिवर्तनविषये नरसिंहन् समितिः अनेकानि अनुशासनानि उल्लेखयामास । अत्र संक्षेपतः तेषु कतिपयानां निर्देशः क्रियते । धनागारसंस्थाभिः ऋणत्वेन दीयमानधनस्य उपरि निक्षिप्यमाणवार्धुण्यस्य परिमाणं धनीयपण्यप्रभावनिर्धारितं भवेत् । एतत् सर्वकारेण केन्द्रियधनागारेण वा नैव प्रतिष्ठापनीयम् । धनागारसंस्थाभिः सङ्गृहीतधनसञ्चयस्य निर्दिष्टभागः केन्द्रियधनागारसंस्थायां सर्वकारेण निर्दिष्टन्यासे निक्षेप्तव्यम् इति विधिबन्धः वर्तते । अयं निर्दिष्टभागः न्यूनीकृतः । व्यवसायपतिभ्यः धनऋणं प्रदातुं धनगारसंस्थानां सामर्थ्यं वर्धितव्यम् इति एतादृशक्रमस्य उद्देशः आसीत् ।

देशे १९६९ तमे वर्षे धनगारसंस्थानां राष्ट्रियकरणं कृतम् आसीत् किल । राष्ट्रियकरणस्य उद्देशः अयमासीत् यत् धनागारसंस्थाः देशस्य विविधभागेषु, तत्रापि ग्रामीणप्रदेशेषु स्वीयशाखासंस्थाः प्रस्थाप्य तत्रत्यजनेभ्यः धनागारानुकूल्यानि प्रकल्पयन्तु इति । तथा च समाजस्य अपुरोगामिजनविभागस्य कल्याणार्थम्, आर्थिकरङ्गेषु विशेषप्रणोदनार्हाणां कृषिरङ्गलघूद्योगादीनाम् अभिवृद्धये, अल्पवार्धुण्यऋणं,

सुगमसाध्यऋणदानविधानम् इत्यादयः क्रमाः विभाविताः आसन्। तत्क्रमेण धनागाराः गतत्रिंशद्वर्षेभ्यः अनेकनूतनक्रमान् व्यावहारीकृत्य राष्ट्रिकरणस्य समाज-कल्याणाभिवृद्धिरूपोद्देशान् साधयितुं कार्यबद्धाः आसन्। परन्तु एतादृशक्रमैः धनागाराणां लाभार्जनसामर्थ्यं, मूलसम्पत्तिबलं, सामान्यारोग्यं च अत्यन्तं भ्रंशितानि अभवन्। अनेन अनेके धनागाराः अस्वास्थ्यभावम् आपद्यमानाः इव दृष्टाः। अतः धनागाराणां स्वास्थ्यं पुनः स्थापयितुं नरसिंहन् समितिः अनेकान् उपायान् योजयामास।

आदिमावेक्षार्हेभ्यः रङ्गेभ्यः विधिबलात् दीयमानऋणधनस्य अंशं विघटयितुम् अनुशासनं विहितम्। लाभार्जनानर्हाणां धनागारशाखानां, धनागारसंस्थानां अपि लाभार्जनसमर्थैः, निपुणतरैः धनागारैः साकं विलयनं कार्यम् इति विहितम्। धनागारसंस्थासु विनियुक्तानाम् अधिकारिणां कार्मिकाणां च कार्यदक्षतां वर्धयितुं तत्रत्यकार्यनिर्वाहपरिसरस्य आधुनिकीकरणं, गुणकयन्त्राणां, दूरसम्पर्कसौकर्याणां, विदेशीयधनागारेषु प्राप्यं गुणवत्तास्तरं प्रति प्रापणम् इत्यादयः अनेके क्रमाः उपायाश्च सूचिताः। संक्षेपतः वक्तव्यं चेत् नरसिंहन् समितेः अनुशासनानि देशस्य धनागारसंस्थानां कार्यव्यवस्थायां विशेषक्षमतां प्रचोदयितुम् अत्यन्तम् उपकारकाणि आसन्।

**कराकरणव्यवस्थायाः शोधनम्**

चेल्लय्यातज्ज्ञसमितिः देशस्य आयकरव्यवस्थां, परोक्षकरव्यवस्थाम्, आयातकरव्यवस्थाम् अनुलक्ष्य शोधनोपायान् सूचयामास। भारतदेशे आयकराणां प्रमाणानि अत्यधिकानि विद्यन्ते। आयकराणां गुरुप्रमाणत्वात् प्रामाणिकतया करप्रदानप्रवृत्तिः लघूभवति। कृष्णधनमिति कथ्यमानस्य विधिविरुद्धधनायस्य च अभिवृद्धिः भवति। अतः आयकरस्य प्रमाणानि विघटितव्यानि इत्यात्मकविचारधारां प्रमेयं च पुरतः कृत्वा आयकराणां लघूकरणम् अनुशासितम्। तथा च परोक्षकराणां वैविध्येन, उत्पादनव्यवसायस्य पूर्वपूर्वदशासु अपि प्रत्येकं परोक्षकराकरणेन उत्पादितवस्तूनां चरमावस्थायां गण्यमानमूल्ये परोक्षकराणामेव अंशः अत्यधिकः भूत्वा उत्पादितवस्तूनां मौल्यमपि अधिकं भवेत् इत्यादितर्कबद्ध-

विचारानुमोद्य चरमदशार्धवृद्धिमूलमात्रनिक्षिप्तपरोक्षकरपद्धतिः अनुशासिता। परोक्षकराणामपि प्रमाणम् अल्पीकार्यम् इति विहितम्। देशस्य आयातकराणां प्रमाणानि जगतः अनेकान्यदेशानां तुलनायाम् अत्यधिकानि वर्तन्ते इति अर्थशास्त्र-संशोधकैः प्रचुरतया प्रमाणितं वर्तते। चेल्लय्यासमित्या इमं विषयमनुमोद्य आयातकराणां विशेषप्रमाणेन विघटनम् अनुशासितम्।

## नीतिपरिवर्तनस्य विमर्शनम्

सर्वकारस्य अर्थमन्त्रिमहोदयः डॉ मनमोहनसिंहमहाभागः उपरिनिर्दिष्टयोः तज्ज्ञसमित्योः अनुशासनानि पूर्णतया अङ्गीकृत्य आत्मनः प्रतिवर्षं लोकसभायां प्रस्तूयमाने वार्षिकायव्यययोजनालेख्यपत्रे बहुप्रकारकनीतिपरिवर्तनानि उद्घोषयामास। एतैः नीतिपरिवर्तनैः देशस्य आर्थिकदशायां नूतनम् आन्दोलनम् इव समजायत। देशे आर्थिकतज्ज्ञानां मध्ये तीक्ष्णतमं चर्चायुद्धमिव प्रक्रान्तम्। एकतः नीतिपरिवर्तनविरोधिनः प्रायः राजकीयपरिसरे वामपन्थिनः इति विदिताः जनाः नूतननीतिक्रमः देशस्य अद्ययावत् प्रस्थापितान् उद्योगव्यवसायान् पण्यप्रभावितस्पर्धानिमित्तेन सम्पूर्णविनाशदशां प्रति नेष्यति, देशस्य आर्थिकस्थितिः आत्मनिर्भरताध्येयं तिरस्कृत्य परावलम्बनरूपहीनायदशां प्रति प्रचलति इति प्राग्भयसूचनाक्रन्दनं कुर्वाणाः दृश्यन्ते। अन्यतः पाश्चात्यदेशानाम् अर्थशास्त्रप्रमेयेषु जागतिकधनागारसंस्थाप्रचोदिते विकासनिदर्शने नीतिक्रमे च अचलश्रद्धां सन्दधानाः तज्ज्ञाः, नीतिपरवर्तनैः देशः विविधरङ्गेषु अनितरसाधारणविकासं, विदेशीयपण्यस्थानेषु स्पर्धापुरोगामित्वं च साधयित्वा अद्य यावत् अन्तरेव तिरोहितं सर्वतोमुखविकाससामर्थ्यं बहिः व्यञ्जयित्वा विकासशीलदेशेषु अग्रिमस्थानम् अचिरादेव भूषयिष्यति इति बाहुद्वयमुत्सार्य उद्घोषयन्तः आत्मनः मुखेषु आत्मविश्वासस्य महदानन्दस्य च परां काष्ठां च प्रदर्शयन्ति। अनयोः विमर्शकसङ्घयोर्मध्ये मध्यमस्थानं परिगृह्णन्तः तज्ज्ञाः, नीतिविचक्षणाश्च विद्यन्ते ये बहुतीव्रगत्या प्रवर्तमाननीतिपरिवर्तनैः असमाहितचित्ताः भूत्वा, देशस्य आर्थिकविकासभविष्यमनुलक्ष्य आत्मनः हार्दिकशङ्कां सूचयन्ति। नीतिपरिवर्तनस्य आवश्यकतामनुमोदमाना अपि एते देशस्य असङ्ख्यदरिद्रजनानाम् आर्थिकदशां परितपमानाः, धनिकदरिद्रजनानाम् आर्थिकदशासु स्थितं, काले प्रवर्धमानम् अन्तरम् बहुसङ्ख्या-

तजनानां निर्विद्यतानिरक्षरतानिरुद्योगताऽस्वास्थ्यादिदशाः अनुलक्ष्य सर्वकारः सर्वमपि पण्यप्रभावस्य उपरि एव नैव परित्यजेत्, यथापूर्वं योजनापद्धत्यां नेहरूमहाभागेन प्रणोदितां सार्वजनिकस्वायत्ततारूपरङ्गद्वयपद्धति न विहाय आत्मनः कार्यभारं निर्वहेत् इति प्रतिपादयन्ति । विदेशीयोद्योगव्यवसायपतीनां सुगमप्रवेशेन देशस्य असङ्ख्यजनसमुदायस्य जीवनपद्धतिः, आयव्ययव्यवहारक्रमश्च तीव्रतया परिवर्तनम् अनुभवेतां येन दरिद्रजनानाम् आर्थिकसामर्थ्यम् अत्यन्तं विघटेत इत्यपि शङ्कां प्रकटयन्ति ।

अस्माकं देशे विकासमार्गस्य प्रारम्भे एव योजनापद्धतिः स्वीकृता आसीत् । पण्यप्रभावक्रमः, सर्वकारेण निर्देशनम् इति उभावपि एककाले व्यवहारीकृतौ आस्ताम् । सार्वजनिकरङ्गः स्वायत्तविभवरङ्गः इति उभावपि परस्परपोषकौ भूत्वा प्रवर्धमानौ अवर्तेताम् । यदि एतादृशे अनन्यसाधारणे, केवलं भारतीयतज्ज्ञविचारविभाविते विकासनिदर्शने ये केचन दोषा इव व्यवहारे अनुलक्षिताः ते सर्वे प्रायः भारतीयविकासनिदर्शनस्य तन्मूलभूतप्रमेयस्य वा दोषाः सर्वथा न वर्तन्ते । परन्तु व्यवहारीकरणसमये आरोपिताः न्यूनताप्रापकाः विविधाः घटनाः एव विकासविफलीभावस्य कारणानि इति सूक्ष्मावेक्षकनिरीक्षकाणां विचाराः इति गमनार्हो विषयः । एतैः आवेक्षकैः स्फुटं प्रतिपाद्यते यत् सर्वकारेण मूलभूतविकासनिदर्शनं नैव परित्यक्तव्यम् । सर्वकारस्य अधिकारिभिः यत् अतिशयितप्रभावसञ्चालनं क्रियमाणं वर्तते । तेन देशे, आर्थिकव्यवसायरङ्गेषु दक्षतायाः ह्रासः तीव्रगत्या सञ्जातः वर्तते । व्यवसायकर्तृणां सर्वकारे आलम्बनं, सर्वकाराधिकारिभिः, प्रदीयमानानुमतिपत्रादिप्रापणार्थम् उत्कोचधनप्रदानप्रवृत्तिः, आर्थिकनिर्धाराणां त्वरितगत्या ग्रहणे अशक्यता इत्यादिनिमित्तैः, मूलभूतनिदर्शनस्य सूक्तत्वे सत्यपि, तस्य लाभकारिपरिणामाः देशे नैव अनुभवपथमायाता इति हन्त । अतः मध्यममार्गे श्रद्धां दधानाः अर्थशास्त्रविचक्षणाः अधुना प्रवर्तितस्य नीतिपरिवर्तनस्य उद्देशं स्वरूपमपि अधिकृत्य तीव्रशङ्कां प्रकटयन्ति । नीतिपरिवर्तनं केवलं सर्वकाराधिकारिणाम् आर्थिकव्यवहारेषु अतिशयिततया प्रवृद्धायाः अन्तरायताप्रवृत्तेः लघूकरणार्थं प्रवर्तितव्यम् इति निर्व्याजमत्या प्रतिपादयन्ति ।

एवम् आर्थिकनीतिपरिवर्तनम् अनेकमुख्योद्देशाननुलक्ष्य प्रवर्तितं वर्तते इति गमनार्हो विषयः ।

अष्टमं प्रकरणम्

# आर्थिकविकासस्य सांख्यिकविश्लेषणम्
# १९५०-१९९६

पूर्वप्रकरणेषु स्वातन्त्र्यात् पूर्वं स्वातन्त्र्योत्तरकाले च प्रसक्तायाः आर्थिक-विचारधारायाः, काले काले प्रवृत्तानाम् आर्थिकनीतीनां च विवरणम् उपस्थापितम्। स्वातन्त्र्योत्तरकाले १९५० संवत्सरादारभ्य १९९६ संवत्सरपर्यन्तं प्रवृत्तस्य आर्थिक- विकासस्य संक्षेपेण सांख्यिकविश्लेषणम् अस्मिन् प्रकरणे विधास्यते। आर्थिकविकासस्य अवधारणम् आर्थिकपरिस्थितेः विविधस्वरूपाणां सांख्यिकावगमनेन भवितुं शक्यते। अत्र राष्ट्रियादायस्य वृद्धिः, आयातनिर्यातयोः विधानाङ्कनम्, आयसञ्चयस्य प्रमाणं, मूल्यवृद्धेः गतिः, कार्योद्योगावकाशानां विस्तारः, जनतायाः दारिद्र्यावस्थायाः परिगणनम् इत्यादीनाम् आर्थिकस्थितेः मापकानां परिचयविश्लेषणादिकम् अवश्यं करणीयम्। गतपञ्चदशकेषु राष्ट्रियायस्य वृद्धिः कीदृशी आसीत्? तत्रापि कृषिरङ्गस्य, औद्योगिकरङ्गस्य, आर्थिकसेवारङ्गस्य च विकासाः कीदृशाः आसन्? राष्ट्रस्य सामग्रिकादाये विविधरङ्गानां भागदानं कियदासीत्, काले काले च कथं परिवर्तनं समभूत् इत्यादिविषयानधिकृत्य विमर्शनं प्रथमं तावत् करणीयम्।

## राष्ट्रियायस्य वृद्धिविधानम्।

निम्ननिर्दिष्टम् अङ्कफलकं—१, १९५१-५२ वर्षादारभ्य, १९९५-९६ वर्षपर्यन्तकाले दशकान्तरसीमितं राष्ट्रियादायस्य गतिविधानं निर्दिशति।

## प्रथमम् अङ्कफलकम्

## राष्ट्रियायस्य वृद्धिगतिविधानम्

(सामान्यवृद्धिगतिः)

| समयः | अद्यतनमूल्ये | स्थिरमूल्ये (१९८०-८१) |
|---|---|---|
| १९५१-५२ तः १९६०-६१ | ५.७ | ३.९ |
| १९६१-६२ तः १९७०-७१ | १०.१३ | ३.७ |
| १९७१-७२ तः १९८०-८१ | १२.२ | ३.३ |
| १९८१-८२ तः १९९०-९१ | १४.४१ | ५.५ |
| १९९१-९२ तः १९९५-९६ | १७.७४ | ७.१२ |

एतस्मिन् प्रथमे अङ्कफलके, राष्ट्रियायस्य अद्यतनमूल्ये, तथा च १९८०-८१ वर्षस्य स्थिरमूल्ये एव निरूपितां सामान्यवृद्धिगतिं प्रतिभासयति । राष्ट्रियायस्य स्थिरमूल्ये मापनेन केवलं मूल्याभिवृद्धिनिमित्तं या आयवृद्धिः सञ्जाता अभवत् तां व्यवकलय्य निजरूपेण सम्पादिताम् उत्पादनपरिमाणसूचकाम् आयवृद्धिम्

अवगन्तुम् शक्यते । **अद्यतनमूल्ये निरूपिता** राष्ट्रियायवृद्धिः आपाततः अधिकपरिमाणवत्वेन प्रतिभाति । परन्तु तत्र अधिकांशा वृद्धिः मूल्याभिवृद्धिसम्पादिता सती आपाततः आधिक्यं भासयति इत्यवगन्तव्यम् ।

१९५१-५२ वर्षादारभ्य १९६०-६१ वर्षपर्यन्तं स्थिते प्रथमदशके राष्ट्रियायस्य **सामान्यवृद्धिगतिः** अद्यतनमूल्ये निरूपिता चेत्, प्रतिशतं ५.७ अङ्कसीमिता आसीत् । **मूल्याभिवृद्धिनिमित्तं सम्पादितवृद्धेः व्यवकलने** कृते सति स्थिरमूल्यनिरूपिता वृद्धिगतिः केवलं प्रतिशतं ३.९ अङ्किता भवति । तदनु प्रत्येकं **षष्ठितमवर्षाणां दशके,** सप्ततितमवर्षाणां दशके, तथा च अशीतितमवर्षाणां दशके च अद्यतनमूल्यनिरूपिता वृद्धिगतिः क्रमशः प्रतिशतं १०.१३, १२.२, १४.४१ अङ्कस्वरूपा आसीत् ।

तेष्वेव **दशकेषु** स्थिरमूल्यनिरूपिता वृद्धिगतिः क्रमशः ३.७, ३.३, ५.५ अङ्कस्वरूपा आसीत् । १९९१-९२ तमवर्षादारभ्य १९९५-९६ तम वर्षपर्यन्ते काले अद्यतनमूल्यनिरूपिता वृद्धिगतिः प्रतिशतं १५.५४ अङ्कस्वरूपा आसीत् । तथैव स्थिरमूल्यनिरूपिता वृद्धिगतिः प्रतिशतं ७.१२ अङ्कसीमिता आसीत् । १९९१-९२ तमे वर्षे देशे आर्थिक सङ्कटस्थितिः आपन्ना आसीदिति निमित्तेन तस्मिन् वर्षे स्थिरमूल्यनिरूपिता वृद्धिगतिः केवलं ०.५ अङ्कसीमिता आसीत् । तां व्यवकलय्य परिमाणे गृहीते सति १९९२-९३ तम वर्षादारभ्य १९९५-९६ तमवर्षपर्यन्तं स्थिते वर्षचतुष्टयकाले स्थिरमूल्यनिरूपिता वृद्धिगतिः ६.३ अङ्कस्वरूपा भवतीत्यवगन्तव्यम् ।

अनेन विश्लेषणेन निम्नलिखितानि अवधारणानि स्फुटीभवन्ति ।

१) स्थिरमूल्यनिरूपिता वृद्धिगतिः अद्यतनमूल्यनिरूपितवृद्धिगत्यपेक्षया अतिन्यूनतमा अर्धांशादपि अल्पा वर्तते । अस्य भावः एवं भवति यत् **मूल्याभिवृद्धिप्रचोदिता** आयवृद्धिगतिः अधिकतरा आसीदिति ।

२) अशीतितमवर्षाणां दशके, नवतितमवर्षाणां **पञ्चके** च स्थिरमूल्यनिरूपितवृद्धिगतिरपि पूर्वतनदशकेषु सम्पादितवृद्धिगत्यपेक्षया अधिका सती देशे अनुभूयमानां नूतनार्थिकनीतीनां प्रभावप्रचोदितां जागृतिं द्योतयति ।

## राष्ट्रियोत्पादनस्य रङ्गरचना

राष्ट्रियोत्पादनस्य सामग्रिकपरिम्णणं विविधोत्पादनरङ्गानाम् उत्पादनपरिमाणैः सङ्कलय्य सङ्घटितं भवति। तत्र विशेषतः कृषिरङ्गस्य, औद्योगिक रङ्गस्य, उत्पादनसेवारङ्गस्य च अंशदानं काले काले कियत्परिमाणम् आसीदिति विषयस्य विमर्शनं देशस्य आर्थिकविकासस्वरूपस्य स्थूलावगतिप्राप्त्यर्थम् आवश्यकं वर्तते। निम्नप्रदर्शिते द्वितीयाङ्कफलके गतदशकेषु दृष्टं राष्ट्रियोत्पादनस्य रङ्गरचनायाः चित्रणं प्रस्तूयते। राष्ट्रियोत्पादने कृष्यादिरङ्गस्य अंशदानं १९५०.५१ तमे वर्षे प्रतिशतं ५६.४६ अङ्कमितं सत् क्रमशः विघट्यमानं सत् १९९०-९१ तमे वर्षे २८.७५ अङ्कमितं समभवत्। आर्थिकविकासप्रमेये एवं प्रतिपादितं वर्तते यत् यथा यथा कश्चन देशः आर्थिकविकासं साधयति तथा तथा कृष्यादिरङ्गस्य राष्ट्रियोत्पादने योगदानं विघटयत् सत् औद्योगिक रङ्गस्य सेवारङ्गस्य च योगदानं तीव्रगत्या

**द्वितीयम् अङ्कफलकम्**

**राष्ट्रियोत्पादनस्य रङ्गरचनाविधानम्,**

| समयः | कृष्टिरङ्गः, अरण्यविभवः समुद्रविभवः, खनिजरङ्गश्च | औद्योगिकरङ्गः, विद्युदादिरङ्गश्च | सेवारङ्गाः |
|---|---|---|---|
| १९५०-५१ | ५६.४६ | १५.०५ | २८.४९ |
| १९६०-६१ | ५२.१३ | १८.७४ | २९.१३ |
| १९७०-७१ | ४५.७७ | २२.३७ | ३१.८८ |
| १९८०-८१ | ३९.६४ | २८.३६ | ३५.९९ |
| १९९०-९१ | ३२.९१ | २८.०३ | ३९.०६ |
| १९९५-९६ | २८.७५ | २९.२४ | ४२.०१ |

प्रत्येकं वर्धयति । एवमेव भारतदेशे औद्योगिकरङ्गस्य योगदानं १९५०-५१ वर्षादारभ्य प्रतिशतं १५.०५ अङ्कात् अभिवर्धमानं सत् १९९५-९६ वर्षे २९.२४ अङ्कं प्राप्तं वर्तते । तथैव सेवारङ्गस्य योगदानं १९५०-५१ वर्षे प्रतिशतं २८.४९ अङ्कमितं सत्, १९९५-९६ वर्षे ४२.०१ अङ्कम् अधिगतं वर्तते । विकासगतेः विमर्शकाः मन्यन्ते यत् भारतदेशे राष्ट्रियोत्पादनस्य रङ्गरचनाविधानम् अतीव मन्दगत्या परिवर्तमानं सत् राष्ट्रियायस्य वृद्धिगतिमपि अन्यदेशानामनुभव-पेक्षया अतीव मन्दतरां विधास्यतीति ।

## आयसञ्चयस्य, मूलधनप्रयोगस्य च विधानम्

राष्ट्रियविकासस्य सर्वतोमुखीनस्वरूपावगमनार्थम् आयसञ्चयस्य, मूल-धनप्रयोगस्य च विधानं कीदृशमासीदिति विषयस्य विमर्शनम् आवश्यकं वर्तते । शीघ्रगत्या विकासं साधितवतां देशानां विमर्शनेन इदमवगतं भवति यत्

### तृतीयम् अङ्कफलकम्[१]

राष्ट्रियोत्पादने आयसञ्चयस्य, मूलधनप्रयोगस्य, विदेशीयायसञ्चयस्य च अंशदानं

(प्रतिशतं)

| समयः | आयसञ्चयस्य अंशदानम् | मूलधनप्रयोगस्य अंशदानम् | विदेशीयाय-सञ्चयस्य अंशदानम् |
|---|---|---|---|
| १९५०-५१ | १०.४ | १०.२ | —०.२ |
| १९६०-६१ | १२.७ | १५.७ | २.८७ |
| १९७०-७१ | १५.७ | १६.६ | ०.९ |
| १९८०-८१ | २१. २ | २२.७ | १.७ |
| १९९०-९१ | २४.३ | २७.७ | ३.४ |
| १९९५-९६ | २५.६ | २७.७ | २.१ |

१. अत्र आयसञ्चयपदं देशीयायसञ्चयमेव सूचयति । तथैव मूलधनप्रयोगपदम् अन्तर्देशीय विभवेन सम्पादितं मूलधनप्रयोगं विभावयति ।

देशे आयसञ्चयप्रवृत्तेः मूलधनप्रयोगमानस्य च ज्यायस्त्वसाधनेनैव आर्थिकविकासस्य **स्थायिरूपेण** साधनं शक्यमिति। यदि राष्ट्रियायस्य सञ्चयपरिमाणं तथा च अन्तर्देशीयविभवेन मूलधनप्रयोगस्य परिमाणं च बहुकालपर्यन्तम् **अल्पमितेः** सीमितं वर्तते, तर्हि तादृशः देशः **अन्ताराष्ट्रियमूलतः** मूलधनम् ऋणरूपेण, अन्यप्रकारेण वा संगृह्य शीघ्रगत्या विकासं साधयितुं प्रभवेत्। अनेन देशे ऋणप्रतिसन्दानभारः प्रवर्धमानः विकासगतेः **स्थायित्वस्वरूपं** विघटयतीति अनुभवसिद्धम्।

तृतीयम् अङ्कफलकं भारतदेशस्य आयसञ्चयप्रमाणस्य, मूलधनप्रयोगप्रमाणस्य च परिचयं विदधाति। आयसञ्चयस्य अंशदानं १९५०-५१ वर्षे अत्यल्पप्रमाणं प्रतिशतं १०.४ मितं सत्, क्रमशः अभिवर्धमानं सत् १९९५-९६ वर्षे प्रतिशतं १५.७ अङ्कम् संप्राप्तं वर्तते। तथैव राष्ट्रियोत्पादने मूलधनप्रयोगस्य अंशदानं १९५०-५१ वर्षे अत्यल्प १०.२ अङ्कमितं सत्, क्रमशः अभिवर्धमानं सत् १९९५-९६ वर्षे प्रतिशतं २७.७ अंकमितिं आसादयत् वर्तते। विदेशीयायसञ्चयस्य अंशदानस्य परिसंख्यानं **देशीयमूलधनप्रयोगस्य अंशदानमितेः** देशीयायसञ्चयस्य अंशदानस्य मितिं व्यवकलय्य प्राप्यते। तृतीयाङ्कफलकस्य तृतीयकोष्टके विदेशीयायसञ्चयस्य अंशदानस्य परिचयः प्रदत्तः वर्तते। १९५०-५१ तमे वर्षे विदेशायसञ्चयस्य आवश्यकता नासीत्, यतः **देशीयमूलधनप्रयोगस्य** मितिः अल्पा सती देशीयायसञ्चयपरिमाणेन एव **पूरितप्राया** आसीत्। राष्ट्रियोत्पादनपरिमाणाङ्गतयाविदेशीयायसञ्चयस्य अंशदानं १९९०-९१ वर्षे प्रतिशत ३.४ अंकमितं सत् **अधिकतममासीत्**। १९९५-९६ वर्षे तु इदम् अंशदानं प्रतिशतं २.१ अङ्कमितमासीत्।

भारतीयार्थिकनीतीनां पञ्चवार्षिकयोजनाक्रमस्य च **न्यूनता** आयसञ्चयपरिमाणस्य, मूलधनप्रयोगपरिमाणस्य च अल्पीयस्त्वदशायां स्फुटीभवति इति आर्थिक विकासविमर्शकानां मतमत्र अवगाहनामर्हति।

**आयातनिर्यातयोः समीक्षा**

अधुना **जागतिकपरिसरे** विभिन्नदेशानां मध्ये **परस्परव्यापारनिमित्तं, मूलधनप्रवाहनिमित्तं, तज्ज्ञजनविनिमयनिमित्तं वा, परस्परावलम्बित्वम्** अतिशयेन प्रवृद्धं वर्तते । **सम्पर्कसेवासौकर्यस्य नूतनयन्त्रपरिभाषाशोधनादिभिः** प्रभूतं प्रसृतत्वात्, विभिन्नदेशानाम् आर्थिकसम्बन्धाः सर्वाङ्गीणव्याप्तिं बद्ध्वा नूनम् अत्यन्तं गाढाः सम्पन्नाः वर्तन्ते । तत्र आयातनिर्यातनिरूपितः देशानां परस्परसम्बन्धः विशेषावगाहनामर्हति ।

प्रत्येकं देशः **रचितानाम्,** अर्धरचितानां वस्तूनाम्, **उत्पादनसामग्रिरूपाणां** वस्तूनां वा निर्यातेन, **उत्पादनसेवाकार्यक्रमाणां** च देशान्तरेषु प्रयोगेण च विदेशीयमुद्राणाम् अर्जनं कर्तुं प्रभवति । एवम् अर्जितः **विदेशीयमुद्रासंग्रहः** देशे आर्थिकविकासार्थं जनताया उपभोगार्थं च, आवश्यकानां वस्तूनाम् आर्थिकसेवानाम् आयातार्थम् उपयुक्तः भवेत् । अतः अधुना **विकासप्रमेयविमर्शकाः** विकासशीलदेशेभ्यः अधिकाधिकं **निर्यातीयप्रवृत्तिं** प्रबोधयन्ति ।

चतुर्थम् अङ्कफलकम् देशस्य आयातनिर्यातानां सांख्यिकपरिचयंप्रददाति ।

**चतुर्थम् अङ्कफलकम्**

**आयातनिर्यातानां परिचयः**

(यू॰ एस॰ डालर दशलक्षं)

| समयः | निर्यातः | आयातः | निर्यातायातान्तरम् |
|---|---|---|---|
| १९५०-५१ | १२६९ | १२७३ | —२७६ |
| १९६०-६१ | १३४६ | २३५३ | —१००७ |
| १९७०-७१ | २०३१ | २१६२ | —१३१ |
| १९८०-८१ | ८४८६ | १५८६९ | —७३८३ |
| १९९०-९१ | १८१४३ | २४०७५ | —५९३२ |
| १९९५-९६ | ३१७९७ | ३६६७८ | —४८८१ |

चतुर्थेन अङ्कफलकेन इदमवगतं भवति यत् निर्यातप्रमाणं १९५०-५१ तमे वर्षे १२६९ दशलक्ष डॉलरमितं सत्, १९८०-८१ तमे वर्षे ८४८६ दशलक्ष-डॉलरसंख्याकं समभूत् । त्रिंशद्वर्षेषु सप्तगुणकां वृद्धिं समगच्छत् । १९८०-८१ वर्षादारभ्य १९९०-९१ वर्षं यावत् एकस्मिन् दशके एव निर्यातप्रमाणं १८१४३ दशलक्ष डॉलरसंख्याकं भूत्वा **द्विगुणप्रायां वृद्धिं** प्रादर्शयत् । तदनु पञ्चषवर्षेष्वेव १९९५-९६ वर्षपर्यन्तनिर्यातप्रमाणं प्रभूतसंख्यामितं ३१७९७ दशलक्षडॉलरमितं समभूत् ।

तद्व्यत्ययेन, आयातं १९५०-५१ वर्षे केवलं १६३ दशलक्षडॉलरसंख्याकं सत् त्रिंशद्वर्षेषु १९८०-८१ वर्षं यावत्, सप्तगुणकां वृद्धिं प्राप्य, १५८६९ दशलक्षडॉलर संख्याकं समभूत् । आयातप्रमाणस्य वृद्धिः निर्यातप्रमाणवृद्ध्यपेक्षया अधिकतरा आसीदित्येतत् अवगाहनामर्हति । सप्ततिदशके १९७३ वर्षे, तथा च १९७९ तमे वर्षे द्विवारं खनिजतैलस्य मूल्ये झटिति भूरिप्रमाणका वृद्धिः समभूदिति निमित्तेन आयातमौल्यस्य अनितरसाधारणा वृद्धिः संजाता इत्यवगंतव्यम् ।

निर्यातप्रमाणापेक्षया आयातप्रमाणं निरन्तरं महत्तरं सत् भूरिप्रमाणेन **विदेशीयमुद्रायाः ऋणरूपेण, विदेशीयमूलधनविनियोगरूपेण** वा ग्रहणम् अपरिहार्यमिव समजायत । एतादृशऋणभारस्य लघूकरणम् अधिकाधिकनिर्यातसाधनेन एव शक्यमिति, अत एव निर्यातस्य वृद्धिसाधनार्थं विशेषप्रयासः कार्यः इति विकासविमर्शकानाम् उद्बोधः जरीजागर्ति ।

**आयातनिर्यातप्रवृत्ती** कथं परिवर्तयत्यौ आस्ताम् इत्यस्य अवगमः राष्ट्रियोत्पादन प्रमाणे आयातनिर्यातयोः अंशदानस्य विश्लेषणेन भवति । पञ्चमे अङ्कफलके एतादृशांशदानस्य परिचयः प्रदत्तः वर्तते ।

## पञ्चमम् अङ्कफलकम्

## राष्ट्रियोत्पादने आयातनिर्यातायोः अंशदानम्

| समयः | निर्यातस्य अंशदानम् | आयातस्य अंशदानम् |
|---|---|---|
| १९५०-५१ | ६.७ | ६.८ |
| १९६०-६१ | ४.२ | ७.४ |
| १९७०-७१ | ३.९ | ४.१ |
| १९८०-८१ | ५.५ | १०.३ |
| १९९०-९१ | ६.८ | ९.० |
| १९९५-९६ | १०.८ | १२.३४ |

राष्ट्रियोत्पादने निर्यातस्य अंशदानं १९५०-५१ वर्षे प्रतिशतं केवलं ६.७ संख्याकं सत् अधिकप्रमाणेन वृद्धिं नैव प्रदर्शयति । १९७०-७१ तमे वर्षे, १९८०-८१ तमे वर्षे च निर्यातस्य अंशदानं विघटनोन्मुखं दृश्यते इति हन्त । प्रायः १९९०-९१ वर्षे तदनन्तरं च आर्थिकनीतीनाम् **उदारीकरणनिमित्तम्** आर्थिकपरिसरस्य **जागतिकीकरणनिमित्तं** च निर्यातस्य अंशदानं विशेषेण वृद्धिदिशायां सम्प्रवृत्तमिव प्रतिभाति ।

एतस्मिन्नेव काले आयातस्य अंशदानं क्रमशः **वृद्धिदिशायामेव** प्रचलत् सत्, प्रतिशतं १९५०-५१ तमे वषे ६.८ संख्याङ्कं सत् १९८०-८१ तमे वर्षे १०.३ संख्यामितं सञ्जाय, १९९५-९६ तमे वर्षे प्रतिशतं १२.३४ संख्यामितिं प्राप्नोत् । देशस्य **निर्यातप्रवृत्तिः** इतोप्यधिकतरं तीव्रगत्या वर्धनीया इत्यात्मकः बोधः सावधारणं पुनरुच्चारयितव्यः ।

**सामाजिकविकासस्य परिचयः**

देशस्य सर्वतोमुखीनविकासविमर्शनावसरे सामाजिकावस्थायाः विभिन्नाङ्गनामपि परिचयः विश्लेषणं च अत्यावश्यके आस्ताम् । **सामाजिकावस्थायाः तीव्रगत्या परिवर्तनम् आर्थिकविकासस्य** तीव्रगत्या साधनाय अत्युपयोगी पूरकक्रमः इति **विकासविमर्शनतज्ज्ञाः** उद्बोधयन्ति । देशस्य **सामाजिकावस्थायाः विभिन्नाङ्गानि** एवं वर्तन्ते—देशस्य जनसंख्या, तस्याः वृद्धिगतिः, **जन्मकाले परिगणितम् आयुः- प्रमाणविभावनं, देशे साक्षरताप्रमाणं, स्वास्थ्यनिर्वाहसौकर्यम्** इत्यादयः । षष्ठे अङ्कफलके एतादृशविभिन्नाङ्गनां स्थूलरूपेण परिचयः प्रदत्तः वर्तते ।

भारतदेशस्य जनसंख्या १९५०-५१ वर्षे ३६.१ कोटिसंख्याका सती क्रमशः प्रवर्धमाना सती १९८०-८१ वर्षे ६८.३ संख्याम् अधिगम्य, १९९०-९१ तमे वर्षे ८४.६ संख्या प्राप्य १९९४-९५ तमे वर्षे ९१.६ संख्यामितिम् आसादितवती ।

**षष्ठम् अङ्कफलकम्**

**सामाजिकावस्थायाः परिचयः**

| समयः | जनसंख्या (कोटि) | जनसंख्या वृद्धिगतिः (प्रतिशतं) | आयुः प्रमाणं (वर्षाणि) | साक्षरता मितिः (प्रतिशतं) | वैद्यसंख्या (प्रति १०,००० जनेभ्यः) |
|---|---|---|---|---|---|
| १९५०-५१ | ३६.१ | — | ३२.१ | १८.३३ | १.७ |
| १९६०-६१ | ४३.९ | २.२ | ४१.३ | २८.३१ | १-९ |
| १९७०-७१ | ५४.८ | २.५ | ४७.६ | ३४.४७ | २.८ |
| १९८०-८१ | ६८.३ | २.४६ | ५०.४ | ४३.५६ | ३.९ |
| १९९०-९१ | ८४.६ | २.३९ | ५८.७ | ५२.२ | ४.७ |
| १९९४-९५ | ९१.६ | २.७६ | ६०.८* | — | — |

* १९९२-९३ वर्षसम्बद्धा संख्या

एवम् अनुमान्यते यत् आगामिनि एकविंशतिशतकस्य प्रारम्भकालं यावत् देशस्य जनसंख्या एकशतकोटिसंख्यामपि अतिक्राम्यति इति। जनसंख्यायाः प्रतिशतं **सामान्यवृद्धिगतिः** द्वि संख्याम् अतिरिच्य वर्तमाना सती जनसंख्याविस्फोटस्य भीतिम् अविरतं वर्धयति इति हन्त। देशे जनसंख्यानियन्त्रणोद्देश्याः प्रयासाः जनकल्याणपोषकाः कार्यक्रमाश्च निष्फला इव प्रतिभान्ति। **जनसंख्यावृद्धिरूपविस्फोटनिमित्तेन** एव देशे प्रवृत्तानाम् आर्थिकविकासप्रचोदनपराणाम् औद्योगीकरणादि- कार्यक्रमाणां प्रभावः जनसामान्यस्य नित्यजीवनसौख्यस्य विस्ताराय नैव परिकल्पितः इत्ययं शोचनीयो विषयः।

सामाजिकविकासस्य अन्यदेकं सूचकं **जनसामान्यस्य आयुःप्रमाणम्। जन्मकाले एव अनुमानितम् आयुः प्रमाणं** जनसामान्यस्य शैशवावस्थायां प्राप्यमानस्य आहारस्य पौष्टिकतां, स्वास्थ्यसेवाविधानं तथा च यौवनवृद्धाप्यकालेष्वपि उपलभ्यमानानि जीवननिर्वाहस्य उपयोगीनि सौष्ठवताप्रापकसौकर्याणि च अवलम्बते। जनसामान्यस्य आयुः प्रमाणं १९५०-५१ तमे वर्षे केवलं ३१ वर्षमितम् आसीत्। इदं क्रमशः प्रवर्धमानं सत् १९८०-८१ तमे वर्षे आयुःप्रमाणं सामान्यतः ५० वर्षमितं सञ्जातम्। १९९४-९५ तमे वर्षे इदं प्रायः ६१ वर्षमितम् अभवत् चत्वारिंशद्वर्षसमये आयुःप्रमाणं द्विगुणीभूतमिति समाधानकरो विषयः। परन्तु अनेकेषु अन्यदेशेषु संसाधितात् आयुः प्रमाणात् इदम् अल्पतरमेव इति गणनीयो विषयः।

१९५०-५१ तमे वर्षे देशे **साक्षरता** केवलं प्रतिशतं १८ संख्यामितमासीत्। शतजनेषु मध्ये प्रायः केवलम् अष्टादशजनाः वाचनलेखनादिषु परिणताः आसन्। शतजनेषु द्व्यशीतिसंख्याकाः जनाः निरक्षरकुक्षयः प्रतिभासन्ते स्म। साक्षरताविस्ताराय अनेके कार्यक्रमाः व्यवहारीकृताः। सर्वकारेण भूरिप्रमाणेन धनविनिमयोऽपि कृतः। १९९०-९१ तमे वर्षे साक्षरताप्रमाणं प्रतिशतं ५२ संख्याकं सञ्जातम्। एतादृशप्रगतिसाधने सत्यपि अधुनाऽपि शतजनेषु अष्टचत्वारिंशत् संख्याकाः जनाः निरक्षरतारोगरुग्णाः दीनाः वर्तन्ते इत्ययं स्वतन्त्रभारतस्य

अतीव लज्जाजनकः विषयः। इतष्वनेकदेशेषु साक्षरताप्रमाणं नवतिसंख्यामपि अतिरिच्य वर्तते इति विषयः गणनामर्हति।

जनसमाजस्य **स्वास्थ्यसंरक्षणसौकर्यम्** अपि आर्थिकविकासेन साकम् अभिवर्धनीयम्। स्वास्थ्यसंरक्षणस्य व्यवस्था कीदृशी वर्तते इत्यस्य अवगतिः समाजे प्रति दशसहस्रजनेभ्यः कियन्तः वैद्याः सामान्यतः उपलभ्यन्ते इत्यस्य गणनया सञ्जायते। निम्नलिखितेन षष्ठेन अङ्कफलकेन इदमवगम्यते यत् प्रत्येकं दशसहस्रजनेभ्यः सामान्यतः एको वा द्वौ वा वैद्यौ लभ्यमानौ आस्तां १९६०-६१ तमे वर्षे। परन्तु १९९०-९१वर्षं यावत् वैद्यचिकित्सकानाम् उपलब्धिः तदानुगुण्येन चिकित्सासौकर्यस्यापि उपलब्धिः विशेषेण विस्तृते नैव अभवताम्। १९९०-९१ वर्षे प्रति दशसहस्रजनेभ्यः केवलं पञ्चवैद्यानाम् उपलब्धिः वर्तते इत्ययं शोचनीयो विषयः।

**समाहारविमर्शः**

अस्मिन् प्रकरणे भारतीयार्थिकविकासस्य **सांख्यिकविश्लेषणम्** उपस्थापितं वर्तते। १९५०-५१ वर्षादारभ्य प्रायः १९८०-८१ वर्षपर्यन्तं स्थिते समये राष्ट्रियादायस्य वृद्धिगतिः मन्दा एव सती, १९८०-८१ वर्षादारभ्य प्रसक्तदशकेषु तत्रापि १९९१-९२ वर्षानन्तरं वृद्धिगतिः तीव्रतरा भूत्वा, देशस्य आर्थिकपरिसरे नूतनप्रावीण्यं जागरितम् इव भाति। स्थिरमूल्ये मापिता वृद्धिगतिः अधुनाऽपि अन्यदेशेषु अनुभूतवृद्धिगत्यपेक्षया अल्पतरा एव तिष्ठति। राष्ट्रियोत्पादनस्य रङ्गरचनायां क्रमशः परिवर्तनं प्रचलितं सत् औद्योगिकरङ्गस्य, सेवारङ्गस्य च अंशदानं शीघ्रगत्या अभिवर्धयत् प्रतिभाति। भारतदेशस्य **आयसञ्चयप्रवृत्तिमानं मूलधनप्रयोगप्रवृत्तिमानं** च अधुनाऽपि अन्यदेशेषु उपलभ्यमानप्रमाणापेक्षया अल्पतरे एव आस्ताम्। आयातनिर्यातयोः दीर्घकालिकसमीक्षया इयं प्रमितिः चकास्ति यत् भारतदेशे विदेशव्यापारकक्षः अधुनाऽपि जागतिकस्पर्धापरिसरे अनेकन्यूनतादोषघातितः **प्रच्छन्नसामर्थ्यः अवस्थालाघवं** प्रदर्शयति। निर्यातप्रवृत्तेः जाड्यं, निरन्तरं प्रचीयामानम् आयातनिर्यातान्तरं, विदेशीयमुद्रायाः अपर्याप्तता, वर्धमानः ऋणप्रतिसन्दानभारः इत्यादीः आर्थिकसमस्याः सर्वकारेण उद्योगपतिभिश्च

विशेषगणनाम् अर्हन्ति। भारतदेशस्य सामाजिकविकासपरिसरे अपि अनेकाः समस्याः अद्यापि सङ्कीर्णस्वरूपाः सत्यः, जनसामान्यस्य कल्याणसाधनोद्देशं विघटयन्त्यः दृश्यन्ते। निरन्तरं प्राचीयमानं जनसंख्याप्रमाणं महाभूत इव आर्थिकविकारस्य फलं निगीर्णत् कल्याणाभिवृद्धिगतिं निरुणद्धि। जनसंख्यावृद्धिगतेः तीव्रता नूनम् अवकुण्ठनीया एव। देशे आयुः प्रमाणं, साक्षरता, वैद्योपलब्धिः इत्यादीनां **समाजकल्याणविकासनिदर्शकानां सूचकाङ्कानां** प्रमाणानि **विकासविधानादिकं** च जनसामान्यस्य कल्याणावर्धने दत्तावधानानां देशप्रेमिणां चित्ततृप्त्यै नैव प्रकल्पते इति हन्त।

देशे विकासमार्गे नूतनदिशां, नूतनजागृतिं च सम्पादयितुं, स्वस्वकर्तव्यपालनस्वार्थत्यागनिरन्तरपरिश्रमप्रवृत्तिसेवाभावादिगुणसम्पन्नानां राष्ट्रनेतृणां, तदनुकूलराजकीयसामाजिकसांस्कृतिकपरिसरस्य च आवश्यकता वर्तते इत्यलं पल्लवितेनेति शम्।

# परिशिष्टम्

## शब्दकोशः

# GLOSSARY

## प्रथमं प्रकरणम्

रसायननिर्माणसूत्रम् Formula for producing chemicals

अन्तरिक्षविज्ञानप्रमेयाः Theories in the space science.

तुलनात्मकविमर्शः Comparative analysis

अर्थशास्त्रीयमानवः Economic Man

परमविवेकसम्पन्नः Highly rational

परमावधिपरिमाणवत्वम् Maximum level

तदितरलक्षणः मानवः Non-economic Man or Spiritual man

समग्ररूपेण व्यक्तित्वं Holistic Personality

शाश्वतं पारमार्थिकसुखम् Eternal Spirtual bliss.

समग्रतापोषकव्यक्तित्वम् Holistic entity.

कामाः Wants

आपूर्यमाणम् Being filled up contimously (by river waters)

अचलप्रतिष्ठम् Unchanged existence

कामकामी Crazy with ever increasing desires

इयत्तावत्वम् Having limits

आवश्यकेषणाः Minimum Basic Needs

कामसंयमः Control of wants/Needs

कामविस्तारः Expansion of wants/ greeds

मानवधनम् Human Capital

आवश्यकसामग्रिषु Among the necessary factors of production,

मूलधनम् Basic Capital

कार्यमौलिकता Values in work.

अनुशासनानि Rules and disciplines

कर्तव्याधिकारौ Duties and Rights

सङ्घस्थापनसञ्चालनादिविषया: Matters like Right to establish trade unions and freely running them

श्रमिकवर्ग: Labour class

कार्यकर्तृवर्ग: Officers group

कार्यनिर्वाहका: Managers /Supervisors

कल्याणयोजना: Welfare Measures

उत्तरदायित्वम् Responsibility,

परमावधिदक्षता Maximum Efficiency

दक्षतासम्बद्धप्रणोदनानि Inducements or incentives related to efficiency.

कौशल्यप्राप्ति: Acquiring

विभवस्वाम्यम् Ownership of Assets

व्यक्तिस्वाम्यम् private ownership

सर्वकारस्वाम्यम् Public ownership

पण्यप्रभावभावितविकासनिदर्शनं Development Model conceptualised by market-influences.

अर्थीयविमर्शननिर्णयादिप्रसङ्गा: Occasions of Economic Analysis and Economic decision making

जीवननिर्वाह: Sustenance

समाजस्य कल्याणम् Welfare of the Society

परस्परासङ्गतत्वरूपसमस्या Problem of internal inconsistency

विकासगति: Growth rate

पाश्चात्यार्थशास्त्रनिदर्शनम् Model/ Paradigm based on western economic science.

भारतीयशास्त्रीयनिदर्शनम् Model based on Indian classical thought.

श्रमिकनियुक्ति: Employment of Labour

श्रमिकनिवृत्ति: Dismissal of Labour (Hire/ Fire)

मौलिकताविभावनानिरूपिताम् Formuated by the value perceptions

स्वयं स्फूर्तिप्रचोदितकार्यप्रवृत्ति: Work-tendency based on one's own initiatives

मूलभूततत्त्वानि Basic elements

तर्कबद्धविवेचनप्रवृत्ति: Logically sound analytitical tendency

कार्यदक्षता Efficiency in work

परमावधिः Maximum level

मौलिकतापरिपोषितसात्विक विवेचन-सामर्थ्यम् Ability to do right kind of analysis supported by value judgement.

प्रणोदनविभीषिकाः Incentives and threats

कार्यश्रद्धा Committment

प्रवृत्तिसाङ्गत्यं Consistency

कार्यदक्षता Competence (Three c's)

कार्यसंस्कृतिः Work Culture.

निष्काममनोभावना Detatchment, self-lessness

उत्पादनसंस्कृतिः Production culture

सहकारप्रवृत्तिः Cooperative Tendency

पण्यप्रभावभावितस्पर्धापरिसरः Competitive Environment prompted by market forces.

व्यवसायभूमिका Business field

विभावितपरिणामाः Expected Results

वार्ताबोधः Information and knowledge

अर्थीयकर्तारः Economic Agents

सेवासौकर्याणि Service facilities

अवसादयितुम् To destroy

अनेकाधर्म्यक्रमाः Unjust measures

परस्परसहकारपरिसरः Mutual Cooperative Environment

अर्थीयसामर्थ्यम् Economic Capability

आदायविभजनम् Distribution of Income

सामरस्यम् Congruence

उचितसंमिश्रणम् Proper Blend

कार्यनिर्वहणप्रणाली Management System

निर्देशकनिर्देशितौ Manager and the managed

मौलिकता Value

विमर्शनात्मकावेक्षणम् Critical Approval

स्पष्टप्रेरणाः Clear Instructions/orders

अनुशासनानि Disciplinary Measures

कर्मकराः Workers

अधिकाराः Rights

संभूय सन्धानवादम् Collective Bargaining

सर्वाङ्गीणदक्षतावृद्धिः Increase in overall productivity

विषयतृष्णाविहीनः Devoid of Craze for possessiveness for goods & services

कर्तव्याधिकारौ Rights and Duties

सङ्घर्षराहित्यम् Absence of conflicts and strifes

बहुमुखीननिदर्शनम् Multi-disciplimary Paradigm

विकासशीलदेशाः Developing countries

अर्थविभवः Capital Resources

सांस्थिकव्यवस्था Institutional system

सौष्ठवम् Appropriateness

विकासमार्गस्य प्रसरः Elegance Scope of development path

एतादृशभग्नाशताम् This type of frustration

विश्वधनागारः World Bank

सूक्ष्मेक्षिकामण्डनम् Presentation with close scrutiny

नित्यनैमित्तिककर्माणि Daily Rituals

सौष्ठवम् Elegance, Purity

अनुशासनसंशोधितमानवविभवः Human Capital embellished by discipline

मूलधनम् Basic Captal

विद्यार्जनसौकर्यम् Education facility

धर्मप्रवृत्तिपरिसरः Environment of value-based tendency of functions

सूक्तराज्यव्यवस्था Proper Political system

कराकरणव्यवस्था Tax collection system

सर्वकारनिर्वाचनपद्धतिः System of electing a Government

जनसार्वभौमसत्तानिरूपितव्यवस्था System of Democracy

जनतासेवाप्रवृत्तिः Tendency to serve the peopl

उत्कोचदानग्रहणादिदुराचाराः Bad habits of giving and accepting bribe

विनीतत्वस्वभावः Character of modesty

आभाणकानि Moral sayings

अधुनातनानुभवविश्लेषणम् Analysis of recent experiences

उपेक्षा Neglecting

तारतम्यव्यवस्था System of orderly heirarchy

अवरस्थानस्थिताधिकारिणः Officers at lower levels

उच्चतरस्थानस्थिताधिकारिणः Senior level officers

सामाजिकसुव्यवस्थितता Social Orderliness

विज्ञानम् Maturity in Judgement

नूत्ननूत्नोत्पादनपरिभाषा Newer & Newer production Technologies

मौलिकसिद्धान्तः Value based Theory

सामग्रिकनिदर्शनम् Integrated/ Holistic Model

सारत्वेन As an Essence.

## द्वितीयं प्रकरणम्

असमतोलता Imbalance

आर्थिकाह्वानाः Economic Challenges

निरुद्योगता Unemployment

यन्त्रपरिभाषा Technology

अन्ताराष्ट्रियधनकोशः Reserves of foreign exchange resources

आर्थिकदर्शनम् Economic Philosophy

आर्थिकाभिवृद्धिपथः Path of economic development

अभिवृद्धिमार्गनिदर्शनम् Model of development path

अर्थप्रधानं पण्यनीतिप्रभावितं विकासनिदर्शनम् Development Model influenced by market forces and with predominence of capital

सर्वकारप्रथाप्रभावितं समाजहितप्रधानं विकासनिदर्शनम् Development model in which social welfare is given place of prominence and which is influenced by the policies of the government

क्रयविक्रयसन्तुलनप्रभावः Influence of the forces of demand-supply balance

शोषणधुरः From the Yoke of exploitation

कृषिभूमिस्वामिनः Owners of agricultural land

भूयिष्ठधनस्वामिनः Owners of large capital resources

जीवनविधिः life style.

आन्तरिकासङ्गतिभूयिष्ठा Full of internal inconsistency.

लुण्ठकाः deceiptful

समाजहितवाददर्शनम्— Philosophy of social welfare; Model of Socialism

समाजपरिवर्तनम् Social transformation

शोषितजनान्दोलनप्रचोदितम् Prompted by the agitation of the people who are exploited by the feudal lords.

कृषिस्वामिनः Land Lords,

धनस्वामिनः Capitalists.

समाजस्वाम्यनिदर्शनम् Model of Social ownership of means of production.

कम्युनिजंदर्शनम् Model of Communism.

न चिरायन्ति Would not delay

समाजहितप्रधानविकासनिदर्शनम् Development Model with emphasis on Social Welfare

जनतास्वाम्यवादी Proponent of private ownership

अवनतत्वस्थितिः Status of backwardness.

करदीकृतत्वावस्था Status of being bonded Labour.

स्वीयवित्तस्वाम्यत्वम् Private Capital ownership

सम्भूयकारिसेवा Collective Social service.

समासेन In short/ In conclusion

स्पृहाविधानम् Tastes and Preferences.

अन्तर्वर्गसङ्घर्षः Inter-class agitation

अवनतवर्गैकाधिपत्यम् Sole dominance of the depressed classes

अद्यतनीयस्वीयलाभप्रवृत्तिः Approach of Short-term gains

सहजावबोधेषु In our common understandings

व्यक्तिस्वाम्यवादी Proponent of individual liberty/ownership.

वित्तप्रधानसिद्धान्तः Capitalist theory.

उपभोगवस्तूनि Consumer goods.

आत्महितैकवृत्तखण्डः Private Sector

सार्वलौकिकवृत्तखण्डः Public Sector

क्षिप्रतमाभिवृद्धिक्रमः Fastest growth profile.

सर्वपरिच्छेदाः All Sections

उत्पादनक्रमस्य अवधिः Gestation Lag.

वेतनोपभोग्यवस्तूनि Wage goods.

उत्पादनविभवाः Resources for Production

गुरुतरोद्योगाभिवृद्धिप्रधानः विकासमार्गः Development path with predominence of

the growth of the heavy industries.

वेतनोपभोग्यवस्तूत्पादनप्रधानं निदर्शनम् Development Model with dominence for the production of wage goods

मूलद्रव्यम् Investment Capital.

यन्त्रवस्तूनि Capital goods.

विकासनिदर्शनम् Development Model.

मध्यकालावधिः Medium term.

वृद्धिगतिः Growth rate

विमर्शत्मकविश्लेषणम् Critical analysis.

निर्धारणमतिः Definitive Inference.

आत्मनिर्भरता Self-Reliance.

कार्ष्णायसयन्त्रप्रधानाः (Heavy-machinery) – Capital-goods oriented

परिपाटी System, order.

राष्ट्रियविकासमन्त्रणसंसद् National Development Council.

राजनैतिकरङ्गः Political Sphere.

आर्थिकरङ्गः Economic Sphere.

सामाजिकरङ्गः Social Sphere.

सर्वजनसहकारप्रवृत्तयः Tendencies for cooperative movement.

उपभोगः Consumption

जीविका Employment

परस्परपूरणोपयोगिक्रमेण पूरणम् Fulfillment in a mutually supporting (Consistent) manner

प्रणोदनानि Inducements.

लोकतन्त्रप्रणाली Democratic System

आर्थिकविकासनिदर्शनम् Model of Economic Development

उद्देशाः Targets, Goals,

तत्साधनोपायाः Instruments

दीर्घकालीनोद्देशाः Long Term Goals

सद्यस्कोद्देशाः Immediate Short term Goals

आर्थिकविकासहीनदशायाः From the State of absence of economic development

उद्यमीकरणम् Industrialisation

वैचारिकप्रणाल्याम् Conceptual Framework

सर्वजनस्वाम्यरङ्गः Public Sector

आत्मीयस्वाम्यरङ्गः Private Sector

आर्थिक बलम् Economic Power

एकाधिकारः Monopolies

व्युत्पन्नविचाराः Mature thoughts

मूलभूतयन्त्रोत्पादनम् Basic Capital Goods production

विज्ञाने यन्त्रपरिभाषाविषये In the field of Science and Technology

अवगमनानि Perceptions

मध्यमकालीनोद्देशः Medium term goal

सहकारसङ्घः Cooperative Institutions

सांस्थिकोपायः Institutional measure/ Approach

जनगणहितकारिप्रबन्धाः Schemes of Community Projects

समुदायचिन्तनम् Collective Thinking

ग्रामीणऋणालोकनस्य कथनम् Report on Rural Credit Survey.

गुरुतरोद्योगाः Heavy industries.

कार्यसम्पादक समितिः Committee

राष्ट्रिय-विकास-सभा National Development Council

विशिष्टविधिरचना Special legislation

मूलाधारः Basic foundation

ग्रामस्तरः At the level of Village

ग्रामीण सहकारसङ्घाः Rural Co-operatives

आशासनम् Recommendation

जनसमुदायहिताभ्युदयसाधनक्रियाः Community Development Activities

ग्रामीणजनानां प्रबोधाय For the Awakening of the Rural Peoples

विकेन्द्रीकरणम् Decentralisation

विकासकार्यक्रमसहभागित्वप्रज्ञा Sense of participation in the Development Projects

उपपत्तिः Conviction

मूलभूतयन्त्रोत्पादनम् Basic Capital goods production.

असाधारणशक्यता Extra-ordinary Potential

भारतीयविज्ञानसदस् All India Science Congress

आयातः Imports

शिथिलता Looseness

विज्ञानयन्त्रपरिभाषा Science & Technology

अखिलभारतीयविज्ञानसदस् All India Science Congress,

प्रत्याययति Confirms,

राजनैतिकदासेयः Slave to the political system

अवसरः Time

आदिमशिलान्यासः Laying the foundatin Stone

नूतनपरिवर्तनानि New discoveries, New changes

दूरदृष्टिसन्तुलितनेतृत्वम् Leadership balanced by long-term vision.

जीवनविधिः Life Style

शास्त्रीयविचारसम्पुटम् Scientific Thought

सम्प्रदायाचारकिङ्करता Slavery to traditions and customs

आसेधः Committment.

यन्त्रकलाभिज्ञाः Engineers

अर्थनम् Demand

नवतितमदशकम् The decade of the Nineties

विभाविताः Conceived

विज्ञाननीतिसङ्कल्पः Resolution or Declaration of Science Policy.

सङ्कल्पः Resolution.

विमर्शनालिकावलोकनम् Observation in test tubes.

मूलग्रन्थः Text

ताली Key

कार्योत्साहः Motivation for work.

उत्पादनपरिभाषा Production Technology

उत्पादनवस्तूनि Producer goods (as against consumer goods)

मूलधनम् Capital.

विकासघटकवस्तूनि Component entities of Development

फलोत्पादकरीतिः Productive way.

अधिकोत्पादकतालक्षिताः Characterised by greater productivity.

तालीस्थानापन्नेषु Taking key position

विंशतितमशतकम् Twentieth Century

आर्थिकविवरम् Economic Distance (Gap)

विदग्धतायाः परम्परा Scholarly tradition.

अद्यत्वे In recent times; Now-a-days

उद्बोधप्रकल्पसङ्कल्पः Profound resolution of realisation (Awakening).

राष्ट्रिययोजनाकार्यसम्पादकसभा National Planning Committee

सर्वजनसहकारप्रवृत्तयः Public Co-operation Tendencies.

उपभोगः Consumption.

जीविका Employment.

सञ्चारसम्पर्कसेवाः Transport and communication Services.

स्वास्थ्यसेवा Health Services.

परस्परपूरणोपयोगिक्रमः Mutually Supporting and complementary framework.

उद्देशाः Targets and Objectives

साधनोपायाः Policy Instruments.

परस्परसम्बद्धक्रमः Mutually Consistent manner

उल्लेख्यन्ते Formulated.

दीर्घकालीनोद्देशाः Long Term goals and Objectives

सद्यस्कोद्देशाः Immediate goals and Objectives

उद्यमीकरणम् Industrialisation.

वैचारिकरीतिः Conceptual framework.

सर्वजनस्वाम्यरङ्गः Public (ownership) sector

आत्मीयस्वाम्यरङ्गः Private (ownership) sector

आर्थिकबलम् Economic Power.

एकाधिकाराः Monopoly Power.

व्युत्पन्नविचाराः Mature Thoughts

आधारस्तम्भः Pillar of Support.

मूलाधारः Root cause, or basis

गुरुतरोद्यमः Heavy Industry.

मूलभूतयन्त्रम् Basic Machinery.

व्यक्तिस्वाम्यम् Private ownership

सार्वलौकिकरङ्गः Public sector

व्यक्तिस्वाम्यरङ्गः Private Sector.

संमिश्रणम् Co-existence

विकेन्द्रीकरणम् Decentralisation.

जनसत्तात्मकराज्यपद्धतिः Democratic Political system.

नीतिप्रणाली Policy framework.

विकासनिदर्शनम् Development Model.

सहकारसङ्घव्यवस्था System of Cooperatives.

कृषिभूमिस्वाम्यविषयकपरिवर्तनम् Land Reforms

ग्रामीणऋणसन्दानव्यवस्था A system dealing with the rural credits.

संवादरूपेण Corroborative evidence.

प्रधानसचिवः Chief Secretary

सार्वलौकिकराजस्वम् Public Revenue.

विलक्षणाचाराः Peculiar habits

परिवर्तनविषये पराङ्मुखता Aversion to change.

अवधारणम् Emphasis; assertion.

गुरुतरयन्त्रविज्ञानम् Heavy Engineering

यन्त्रोत्पादनव्यवसायः Machine-building Activity.

उपष्टम्भः Stay, Support, Basic-encouragement.

विज्ञानशास्त्रीयमनोवृत्तिः Scientific Temper.

नूतनपरिभाषाः New Technologies

आर्थिकविवरम् Economic distance

पूर्णतया भागं गृह्णातु Take full participation

उद्बोधप्रगल्भसङ्कल्पः Committment replete with profound enlightenment

उपष्टम्भत्वेन Basic pillars

विज्ञानशास्त्रीयमनोवृत्तिः Scientific Temper,

बोधः Concept, Understanding

विमर्शनालिकावलोकनम् Observation in test tubes.

वैज्ञानिकपद्धतिः Scientific approach

भारतीयविज्ञानपरिभाषासंस्थाः Indian Institutes of Technology.

यन्त्रविज्ञानशिक्षणसंस्थाः Engineering Colleges.

उच्चतरप्रावीण्याः People with higher proficiency

वैज्ञानिकाः Scientists

परिभाषातज्ज्ञाः Technologists.

उच्चस्तरसंशोधनम् Advanced Research.

आध्यात्मिकप्रणोदनम् Spiritual Inspiration

केन्द्रीकृताधिकारपद्धतिः Approach of Centralised Control

अर्थशास्त्रसिद्धान्ताः Economic Theories

व्युत्पन्नमत्या Rational intellect

सर्वस्तरेषु At all levels

नवाचारस्थापने In establishing new traditions and customs

आत्मनिर्भरता Self-sufficiency

विज्ञानपरिभाषा Science & Technology

पर्याप्तधनादानम् Allocation of sufficient money

## तृतीयं प्रकरणम्

सङ्ख्यागणनाचातुर्यम् Competence in Statistical Analysis

नीतिद्वैविध्यम् Duality of policy

अतिमात्रव्ययप्रवृत्तिः Tendency of excessive expenditure

अधिकारस्थानानि Positions of authority

सैन्यस्य धारणम् Support to the Army

मनोभिनिवेशः Concern, application of mind

मुद्राव्यवस्था Exchange Rate System

कराकरणनीतिः Policy of tax-collection

सार्वजनिकसेवासमितिपरीक्षाः Public Service Examinations

ब्रिटिश् पौराधिकारः British Citizenship

दारिद्र्यस्य मापनम् Measurement of Poverty

उपक्रमः Initiative

प्रत्यभिज्ञानम् Recognition

नीतिप्रत्ययाः Policy Pronouncements

सार्वजनिकसेवासमितिपरीक्षा संघलोकसेवायोगपरीक्षा Examinations of Union Public Service Commission

उपक्रमः Initiative

वार्षिकसामान्यायः Average Annual Income

मूलसङ्ख्याः Basic Statistics

अन्तःशून्यता Internal hollowness

कितवता Deceitfulness

बंटनविधानम् Distribution System

सामान्यम् Average

सिद्धान्तीयप्रमेयः Theoretical Proposition

वाटिकेश्वराः Owners of Plantations

उत्पादनाधिपाः Industrialists

खानिकस्वामिनः Owners of Mines

व्यवकलय्य Subtracting

वसु Wealth

प्रबोधनम् Warning, Pronouncement

औद्योगिकविकासः Industrial Development

अनतिक्रम्य Not exceeding

विकासप्रचोदितलाभापेक्षया Compared to the advantages created by development

दवीयस्थानस्थितशासकः Ruler located in a distant place

शोषणसिद्धान्तः Drain Theory

सामान्यजनसभा House of commons

राष्ट्रियविमोचनपक्षः National Liberation Party

अतिशयितव्ययः Excessive Expenditure

दीर्घदर्शिविचाराः Visionary thoughts

आविष्कृताः Made Public

इंडियाकार्यस्थानसमितिः India Office Committee

अवरपदानि Lower positions

राजकीयसंसद् Royal Commission

